चतुष्पादम्-सू. २९-७. सू. ९-१. वैद्यादिपादचतुष्टयम्।

चतुःस्नेहः-चि. १०-२०. सर्पिस्तैलवसामज्जात्मकः।

चयः-सू. १७-११४. वृद्धिः।

चर्या-शा. १-१४३. ईर्य्यापथस्थितिः। (श. क.)

चलः-सू. १-५९. गतिमान्।

चिकित्सकः-वि. ८-५७. वैद्यः।

चिकित्सा-सू. ९-५, १६-३४; चि. १-१ | ३. याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः। सा चिकित्सा विकाराणां कर्म तद् भिषजां मतम्॥ (वै. श.)

चिकित्सितम्-चि. १-१ | ३. चिकित्सा।

चिन्त्यम्-शा. १-२०. कर्तव्यतया अकर्तव्यतया वा यन्मनसा चिन्त्यते इति।

चिह्नम्-नि. १-९. लक्षणं चिह्नमाकृतिः (ना. नि.)

चूर्णम्-क. ८-६५. चूर्ण्यते पिष्यते यत्। (श. क.)

चूर्णकः-इ. १-२१. सक्तुः। (श. क.)

चूषणम्-चि. २३-३५. पानम्। (वै. श.)

चेतः-चि. २४-२९. चित्तम् (श. क.)

चेतनम्-सू. १-४८, २५-२३. सेन्द्रियं द्रव्यम्।

चेतना-शि. ९-३. बुद्धिवृत्तिभेदः।

चेतनाधातुः-सू. २५-९. आत्मा।

चेष्टा-सू. १७-११८. वाङ्मनःशरीरप्रवृत्तिः। (श.क.)

चैतन्यसंग्रहः-सू. ३०-७. तत्र हृदि आत्मा चैतन्यस्य सन्निधिये प्रसृतस्य संग्रहणं करोति।

च्यवनम्-इ. ३-४. च्युतिः।

च्यवमानं विषम्-चि. १५-१०. अधोभागं वायुना नीयमानं विषम्।

च्युतिः-शि. ५-७. स्वस्थानाद् भ्रंशः।

छर्दनम्-सि १२-१५ | ३. वमनम्।

छर्दिनिग्रहणः-सू. ४-१४,२८. अष्टाविंशो महाकषायः।

छादनम्-चि. २५-४१. छादनं तु द्विविधं बाह्यान्तरभेदेन।

छाया-इ. १-३, इ. ७-१३. भौतिकी पञ्चरूपा; वर्णमाक्रामतिच्छाया, आसन्ना लक्ष्यते छाया।

छेदनम्-चि. ११-५५. द्विधाकरणम्। (वै. श.)

छेदनम्-चि. २५-५५. श्लिष्टान् कफादिकान् दोषानुन्मूलयति यद् बलात् छेदनं तद्यथा क्षारा मरिचानि शिलाजतु। (शा. सं; व. द.)

छेदी-सू. २७-१८७. विश्लेषकरः। (वै. श.)

जगलः-सू. २७-१८१. भक्तकिण्वकृता सुरा।

जघनम्-वि. ५-८. कट्यधःस्थानम् (वै. श.)

जघन्यम्-चि. ३०-१७७. पूर्वं वयः।

जङ्गमम्-सू. १-६८. गच्छतीति जङ्गमम्; गमनशीलम्।

जड्ता-इ. ३-५. अस्वता।

जरणः-वि. ६-२१. जठराग्निः, जरणः आहारस्य। (व. द.)

जरणशक्तिः-वि. ४-८. पाचनशक्तिः।

जरायुः-शा. ३-६. जरायुः अपरा, येन वेष्टिता मनुष्यादयः प्रजायन्ते, जरायुणा वेष्टिता जायन्ते इति जरायुजाः मनुष्यादयः।

जलकोष्ठः-सू. १४-३४. अवगाहार्थं कृतं महज्जलपात्रम्।

जलजाः-सू. २७-५४. जले निवासाज्जलजाः; मत्स्याः (श. क.)

जल्पः-वि. ८-२८. पक्षाश्रितयोर्वचनं जल्पः।

जलमृतः-चि. १०-४७. जलमज्जनेन मृतः इव इति जलमृतः, विश्वब्धपावुर्द्धाश्माध्मातोदरसेहनम्। विद्याजलमृतं जन्तुं शीतपादकराननम्॥

जलयन्त्रम्-वि. २४-१५८. जलसेचनयन्त्रम् ।

जवोपरोधः-सू. २१-४. वेगोपरोधः ।

जाङ्गलाः-सू. २७-५१. स्थलजा जाङ्गलाः प्रोक्ता मृगा जाङ्गलचारिणः; जङ्गले भवाः ।

जातिप्रसक्ता प्रकृतिः-इ. १-५. ब्राह्मणजातौ शौचम् इत्यादिप्रकृतिः ।

जालिनी-सू. १७-८६. स्तब्धा सिराजालवती स्निग्धास्रावा महाशया । रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥

जानुः-इ. ३-५. ऊरुजङ्घयोर्मध्यभागः । (श. क.)

जिह्म-वि. ५-५. कुटिलः ।

जिह्वा-चि. २२-६. रसज्ञानेन्द्रियम् । (श. क.)

जिह्वानिर्लेखनम्-सू. ५-७५. जिह्वामलहरदशाङ्गुलकाष्ठिका । (श. क.)

जीर्णः-चि. ३-७. पुराणः ।

जीवः-शा. ३-८. गर्भात्मा ह्यन्तरात्मा यः ।

जीवनम्-सू. १-८०. प्राणधारणम् । (श. क.)

जीवनीयः-सू. ४-८; २५-४०. जीवनीयशब्देनेह आयुष्यत्वमभिप्रेतम् ; मूर्च्छितस्य संज्ञाजनकत्वेन जीवनीयत्वं व्याख्येयम् ।

जीवनीयवर्गः-चि. २-३ | १५. जीवनीयानामिति षट्कषायवर्गोक्तानां जीवकर्षभादीनां दशानां वर्गः ।

जीवितामिसरः-सू. ११-५३. जीवनरक्षाकर्ता । (वै. श.)

ज्वरः-वि. १-३२. चि. ३-३१. स्वेदावरोधः संतापः सर्वाङ्गग्रहणं तथा । युगपद्यत्र रोगे च स ज्वरो व्यपदिश्यते ॥ (मा. नि.)

ज्वरघ्नः-सू. ४-८. ज्वरनाशनः ।

तण्डुलाम्बु-चि. ८-१२५. तण्डुलोदकम् । (श. क.)

तत्त्वावबोधः-सू. ३-१५. यथार्थज्ञानम् ।

तदात्व-सू. ८-३. तदा ।

तदर्थकारि-वि. २-१३. हेतुव्याधिसमत्वेऽपि हेतुव्याधिप्रशमकारि; हेतुविपरीतार्थकारि, व्याधिविपरीतार्थकारि, हेतुव्याधिविपरीतार्थकारि च ।

तदात्वे-सू. ११-२०. तत्क्षणम् ।

तद्विद्यसंभाषा-वि. ८-६. तच्छास्त्राध्यायिना सह संभाषणम् ।

तनुः-सि. ७-४२. अघनः ।

तनु-सि. ५-४. कृशम् ।

तनु-चि. २२-२६. स्वच्छम् ।

तन्त्रप्रयोगः-नि. ७-४. तन्त्रं शरीरं तस्य परिपालनार्थं सद्वृत्तोक्तः प्रयोगः ।

तन्त्रम्-इ. १२-४४. शरीरम् ।

तन्त्रयन्त्रधरः-सू. १२-८. तन्त्रं शरीरं यदुक्तं 'तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्' (इ. अ. १२) इति, तदेव यन्त्रं तस्य धरः यदि वा तन्त्रस्य यन्त्रं सन्धयः तेषां धरः ।

तन्त्रयुक्तयः-सि. १२-८. तन्त्राधिपमार्था युक्तयः ।

तन्द्रा-चि. १-२ | ३. इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः । निद्रार्तस्येव यस्येते तस्य तन्द्रां विनिर्दिशेत् ॥

तमः-सू. २५-२८. तमोगुणः प्रकृत्या गुणविशेषः ।

तमः-चि. ३-१३. मोहकर्तृत्वात्तमः ।

तमः-चि. २३-२०. अन्धकारः ।

तमःप्रवेशः-चि. १०-३. अन्धकारप्रवेश इव ।

तमःस्कन्धः-सू. २५-२८. तमसः स्कन्धः समूहः । पक्षरागश्चेह तत्त्वज्ञानप्रतिबन्धकत्वेन तमःस्कन्ध उच्यते ।

तर्कः-वि. ४-४. अप्रत्यक्षज्ञानम् ।

तर्पणम्-चि. ४-३०. बृंहणम् ।

तर्पणम्-चि. ३-१५. लोपपरिप्लुताः सक्तवः ।

**तर्पणादिक्रमः**–सि. ६–२५. संशोधनानन्तरं कर्तव्यः कर्मविशेषः ।

**तर्षः**–चि. २–४ | ४८. वनिताभिलाषः ।

**तलम्**–सि, ३–२९. हस्तपादतलम् ।

**तलस्वेदः**–सि. १–५०. अग्न्यादितप्तेन हस्ततलेन स्वेदः ।

**तामससत्त्वम्**–शा. ४–३६. पशुशरीरेऽस्ति, तच्च सदोषमाख्यातं मोहांशत्वात् ।

**तालु**–इ. ३–५. जिह्वेन्द्रियाधिष्ठानम् (श. क.)

**तिक्तः**–सू. २६–८, ७८. वाय्वाकाशगुणबाहुल्यात् तिक्तः; प्रतिहन्ति निपातेयो रसनं स्वदते न च । स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः ॥

**तिक्तकम्**–सू. २७–१९९. तिक्तरसात्मकं द्रव्यम् ।

**तिक्तस्कन्धः**–वि. ८–१४३. तिक्तवर्गपरिसंख्यातानामौषधद्रव्याणां समूहः ।

**तीक्ष्णः** चि. ३–५२. दाहपाककरस्तीक्ष्णः स्रावणः; तीक्ष्णं पित्तकरं प्रायो लेखनं कफवातहृत् । (व. द.)

**तीक्ष्णाग्निः**–वि. ६–१२. तीक्ष्णोऽग्निः सर्वापचारसहः

**तुवरः**–चि. २२–२६. कषायरसः । (श. क.)

**तुला**–क. ७–६९, १२–९७. तुलां शतपलं विद्यात् परिमाणविशारदः ॥

**तुषोदकम्**–चि. ३–२६७. सतुषयवकाञ्जिकम्, मृष्टान् माषतुषान् सिद्धान् यवांस्तु चूर्णसंयुतान् । आस्रुतानम्भसा तद्वज्जातं तच्च तुषोदकम् ॥ तुषोदकं यवैरामैः सतुषैः शकलीकृतैः । (व. द.)

**तृणपुत्रिकः**–शा. ४–३१. पुरुषाकृतिभूयिष्ठः असमस्तपुरुषलक्षणयुक्तः ।

**तृणपूली**–चि. २–१ | १८. पूली नपुंसकधर्मित्वात् । तृणपूली पुरुषाकृतिरिति भाषया पुरुषार्थक्रियाविरहित्वं दर्शयति ।

**तृतीयकः**–चि. ३–६७. दिनं हित्वा तृतीयकः ।

**तृप्तिः**–सू. २५–४०. सन्तोषः ।

**तृप्तिघ्नः**–सू. ४–८. एकादशो महाकषायः । तृप्तिः श्लेष्मविकारो येन तृप्तमिव आत्मानं मन्यते तद्घ्नः तृप्तिघ्नः ॥

**तृष्णा**–चि. ३–२६. पिपासा । (श. क.)

**तृष्णानिग्रहणः**–सू. ४–१४,२९. ऊनत्रिंशो महाकषायः ।

**तृष्णोपशमनी चिकित्सा**–वि. ५–२६. उदकवहानां दुष्टानां स्रोतसां चिकित्सा ।

**तेजः**–चि. १५–३. देहोष्मा शुक्रं वा ।

**तोदनम्**–सू. २४–४६. व्यथा । (श. क.)

**तोदः**–सू. १७–५५. सूचीविधनवद्वेदनाविशेषः ।

**तोषः**–वि. ४–८. मुखनयनप्रसादादिः ।

**त्रिकम्**–सि. ३–४१. स्फिक्सकथ्नोः पृष्ठवंशास्थ्नोर्यः सन्निवस्तत्त्रिकं स्मृतम् । (वै. श.)

**त्रिकोषाफलितम्**–सू. ५–५०. त्रिभिः पर्वभिर्भिन्नैः समन्वितम् ।

**त्रिगर्भा**–चि. १–१ | १९. प्रथममेकं गृहं, तस्याभ्यन्तरे द्वितीयम्, एवं त्रिगर्भा त्रयो गर्भा अन्तराणि यस्यां सा; अन्तस्त्रिप्रकोष्ठा ।

**त्रिपर्ययः**–सू. ५–४८. त्रयः पर्ययाः आपानाः यस्मिन् ।

**त्रिप्रकोपणाः**–चि. १७–४. असात्म्येन्द्रियार्थसंयोगपरिणामप्रज्ञापराधकारणकाः ।

**त्रिलिङ्गः**–चि. ४–१३. सान्निपातिकः ।

**त्रिसूत्रम्**–सू. १–२४. त्रीणि हेत्वादीनि सूत्र्यन्ते यस्मिन् येन वा इति ।

**त्रिस्कन्धम्**–सू. १–२५. त्रयः हेत्वादयः स्कन्धरूपायस्य सः–स्कन्धश्च स्थूलावयवः प्रविभागो वा ।

**त्रिस्नेहः**–सि. ३–३६. सर्पिस्तैलवसात्मकः ।

**त्वक्**–इ. ७–३१. स्पर्शग्राहि इन्द्रियम् ।

**त्वक्सारः**–वि. ८–१०३. विशुद्धतरा त्वक् ।

**त्वच्यः**–सू. ५–८७. त्वचे हितः ।

**दधिमण्डः**–क. ८–१०. दध्न उपर्यच्छो भागः।

**दधिमस्तु**–सि. ११–३२. उक्तं दधि द्विगुणवारियुतं तु मस्तु। (वै. श.)

**दधिसरः**–चि. ५–६८. दधिसन्तानिका; दध्यग्रभागः। (वै. श.)

**दध्यम्लम्**–चि. २४–१६१. दध्ना अम्लीकृतम्।

**दध्युत्तरम्**–चि. १७–७४. दधिसरः।

**दन्तपवनम्**–सू. ५–७२. दन्तधावनार्थं काष्ठम्।

**दन्तहर्षः**–नि. १–२१. शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः। पित्तमारुतकोपेन दन्तहर्षः स नामतः॥ (वै. श.)

**दरः**–सू. १७–३१. दरदरिका।

**दशनच्छदौ**–इ. ११–२०. ओष्ठौ।

**दर्शनम्**–इ. ४–८. चक्षुर्गोचरता।

**दहनम्**–सि. ९–७८. अग्निना दाहः।

**दारुणः**–सू. १२–४. शोषणत्वात् काठिन्यकरः।

**दारणम्**–सू. ११–५५. व्रणविदारणद्रव्यम्। (वै. श.)

**दाहः**–वि. ८–३६. दह्यत इव वेदनाविशेषः।

**दाहः**–चि. ५–६३. दाहकर्म।

**दाहप्रशमनः**–सू. ४–८. एकचत्वारिंशो महाकषायः।

**दिवास्वप्नः**–सू. ६–२३. दिवास्वापः।

**दिव्यमुदकम्**–सू. २७–१९८. आन्तरिक्षं जलम्।

**दीपनः**–सि. ३–३८. जठराग्निदीपनः। पचेन्नामं वह्निकृद् यद् दीपनं तद् यथा मिसिः। (व. द.)

**दीपनीयम्**–चि. २८–८७. अग्निदीपनम्।

**दुश्छायः**–इ. ११–३. विकृतच्छायः।

**दुर्गन्धम्**–सू. २७–२१५. पूतिगन्धयुक्तम्।

**दुर्जरम्**–सू. २७–१३८. दुष्पचम्।

**दुर्दिनम्**–सि. २–२०. मेघाच्छन्नदिनम्।

**दुर्बलः**–इ. ९–१५. निर्बलः।

**दुर्मनाः**–सू. १७–७३; इ. ११–३. मनोबलविहीनः

**दुर्विपाकः**–सू. २५–४०. दोषवान् विपाकः।

**दूतः**–इ. १–३. वैद्याह्वानार्थमागतो मनुष्यः।

**दूयनम्**–सू. १७–५८. मुखकण्ठादिषु वेदनायुक्तो दाहः।

**दूषीविषम्**–सू. २१–४५; चि. २३–३१, जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा। स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति (सु. क. २–२५३.)

**दूष्याः**–सू. १९–४–९; नि. ४–४. रक्तादयो धातवः।

**दृढाग्निः**–चि. ३–१७२. दीप्ताग्निः।

**दृष्टिः**–इ. ४–२५. उपलब्धिः, तया दृष्ट्या दृष्टिशक्तिरुपचाराद्उच्यते।

**देशः**–सू. २६–९. भूमिः।

**देशः**–वि. १–३. आतुरः।

**देशः**–सू. १–६२. भूमिरातुरश्च।

**देशानुपातिनी प्रकृतिः**–इ. १–५. यथा अन्तर्वेदिवासिनः शुचयो भवन्ति।

**देहः**–सू. २५–३२ शरीरम्।

**देहप्रकृतिः**–सू. ७–४०. दोषानुशायिता ह्येषां देहप्रकृतिरुच्यते। एतेनैतेषां वातलादीनां मुख्यं स्वास्थ्यं नास्ति, किंतर्हि उपचारस्वस्था एते इति दर्शयति।

**देहव्यायामः**–सू. ७–३१. शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धनी। देहव्यायामसंख्याता मात्रया तां समाचरेत्॥

**दैन्यम्**–वि. ४–८. दीनभावः।

**दैवम्**–शा. १–११६, २–४४; वि. ३–३०; चि. २–१।१०. निर्दिष्टं दैवशब्देन कर्म यत् पौर्वदेहिकम्; दैवं पुरा यत्कृतमुच्यते तत्; दैवमात्मकृतं विद्यात्कर्म यत्पौर्वदेहिकम्; प्राक्तनकर्म।

**दैवव्यपाश्रयम्**-सू. १-५८, ११-५४. दैवमदृष्टं तदाश्रित्य यद् व्याधिप्रतीकारं करोति तद्दैवव्यपाश्रयं बलिमङ्गलादि; मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि ।

**दोषाः**-सू. २७-६८; सि. ४-२२. वातपित्तकफाः ।

**दोषावसेचनम्**-वि. ३-४३. दोषाणामवसेचनं निर्हरणम् ।

**दौर्ग्राह्यम्**-सि. ५-७. दुर्ग्रहता ।

**दौर्बल्यम्**-चि. ८-३३. अल्पबलत्वम् । (श. क.)

**द्रवः**-सि. ३-२४. क्वाथः ।

**द्रव्यम्**-सू. १-२८, ५१, ६४. २६-१०. यत्र कर्मगुणा आश्रिताः यच्च तेषां समवायि कारणं तद्द्रव्यम् ; खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः; आधारकारणम् ; यत् आहारौषधोपयुक्तम् ।

**द्रव्याणाम् अधिकरणम्**-सू. २६-१३. द्रव्याणि यत्र कुर्वन्ति तत् तेषामधिकरणम् ।

**द्रव्याणाम् उपायः**-सू. २६-१३. द्रव्याणि यथा कुर्वन्ति स तेषामुपायः ।

**द्रव्याणाम् कर्म**-सू. २६-१३. द्रव्याणि यत् कुर्वन्ति तत्तेषां कर्म ।

**द्रव्याणाम् कालः**-सू. २६-१३. द्रव्याणि यदा कुर्वन्ति स तेषां कालः ।

**द्रव्याणाम् फलम्**-सू. २६-१३. द्रव्याणि यत् साधयन्ति तत्तेषां फलम् ।

**द्रव्याणाम् वीर्यम्**-सू. २६-१३, ६५. द्रव्याणि येन कुर्वन्ति तत्तेषां वीर्यम् ।

**द्रोणः**-क. १२-९६. कंसश्चतुर्गुणो द्रोणश्चार्मणं नल्वणं च तत् । स एव कलशः ख्यातो घटमुन्मानमेव च ॥

**द्वन्द्वम्**-सू. १४-६६. परस्परं विरुद्धं युग्मम् ।

**द्विजः**-इ. ८-१३. दन्तः ।

**द्वियोनिः**-सू. २५-३६. द्विप्रभवः ।

**द्विरेताः**-शा. २-१७. स्त्रीपुंचिह्नः पुमान् । (वै. श.)

**द्वैहृदय्यम्**-शा. ४-१५. तस्य यत्कालमेवेन्द्रियाणि संतिष्ठन्ते, तत्कालमेव चेतसि वेदनानिर्बन्धं प्राप्नोति; तस्मात्तदाप्रभृति गर्भः स्पन्दते, प्रार्थयते च, जन्मान्तरानुभूतं यत् किंचित्, तद्द्वैहृदय्यमाचक्षते वृद्धाः ।

**धनैषणा**-सू. ११-५. द्वितीयैषणा (वै. श.) ।

**धन्वः**-सि. १-२१. मरुदेशः ।

**धमन्यः**-सू. ३०-१२. ध्मानात् पूरणाद् बाह्येन रसादिना धमन्यः; ध्मानात् धमन्यः ।

**धर्मः**-सू. १-१५. धारणाद्धर्मः, स चात्मसमवेतः कार्यदर्शनानुमेयः ।

**धातवः**-चि. १५-१५. देहधारणाद् धातवः ।

**धातवः**-सू. २२-४१. दोषाः "दोषा अपि धातुशब्दं लभन्ते" इति वचनात् ।

**धातुपाकः**-सू. १८-३. धातुषु धात्वग्निकृतो रसपाकः ।

**धातुवैषम्यम्**-वि. ८-८४. विषमतां गता धातवः ।

**धातुव्यूहनम्**-शा. ४-१२. धातुरचना; धातुवहनं च ।

**धातुसाम्यम्**-सू. २१-४२. विकारोपशमरूपकार्यम् । (वै. श.)

**धातुस्नेहपरम्परा**-चि. १५-२०. धातूनां रसादिसप्तानां तत्स्नेहानां धातुप्रसादरूपाणां परम्पराक्रमः ।

**धानाः**-चि. २-२-१२. धानाकारा भक्ष्याः ।

**धानाः**-चि. ६-२३. भृष्टयवाः ।

**धान्वन्तरीयाः**–चि. ५–४४. धन्वन्तरितन्त्राध्यायिनः शल्यविदः।

**धान्याम्लम्**–सू. १५–७; क. १–१२. काञ्जिकम्।

**धारणम्**–चि. २३–५८. धारणशब्देन शरीरे धारणं ब्रूते, धारणं चौषधशब्देनोपक्रमेषु प्रविशति।

**धारा**–सि. ३–२०. जलादिद्रवद्रव्याणां पतनम्।

**धारि**–सू. १–४२ धारयति शरीरं पूतितां गन्तुं न ददातीति धारि।

**धारि**–सू. ३०–६ शरीरेन्द्रियसत्त्वात्मसंयोगः शरीरधारणाद्धारीत्युच्यते।

**धारिलोहितम्**–वि. ४–७. जीवशोणितम्।

**धारोष्णम्**–चि. २९–८२. दोहकालधारापतितमग्नियोगाद्विना उष्णीभूतम्।

**धीः**–सू. २५–४० बुद्धिः

**धीविभ्रमः**–चि. ९–६. बुद्धेरयथादर्शित्वम्।

**धुक्षणम्**–वि. ६–२१. प्रबोधकम्; प्रोद्दीपकम्।

**धूपः**–चि. २५–१०८. धूपयति स्वगन्धेन प्रीणयित्वा दीप्यतीति। (श. क.)

**धूपनम्**–सू. १७–५८. धूमनिर्गमनमिव ज्ञानम्।

**धूमः**–सू. ५–३९, ४०. पानार्थः। (वै. श.)

**धूमनेत्रम्**–सू. ५–२४. धूमपानार्थं नेत्रम्, नालीविशेषः यं द्वारीकृत्य धूमः पीयते।

**धूमपानम्**–सू. ५–३१. धूमसेवा। (वै. श.)

**धूमवर्तिः**–सू. ५–१०६. धूमपानार्थं यवाकृतिनिर्मिता औषधवर्तिः।

**धृतिः**–सू. २५–४०. धैर्यम्; अलौल्यम्; धृतिर्हि नियमात्मिका अहितेभ्यो मनोनियमनमिति यावत्

**धैर्यम्**–वि. ४–८. धैर्यं विपद्यपि मनसोऽदैन्यम्।

**ध्मापनम्**–सि. ९–८९ प्रधमनम्, 'चूर्णस्याध्मापनं तद्धि देहस्रोतोविशोधनम्' इति वचनाद् ध्मापनं शिरोविरेचनप्रयोजनकमेवेति दर्शयति।

**ध्यानम्** इ. ५–१८. चिन्तनम्।

**नकुलान्धः**–इ. ३–६. नकुलान्धस्तु रूपाणि दिवा शुक्लानि पश्यति।

**नखः**–इ. १–१२. नखरः।

**नयनम्**–इ. १–१२. चक्षुः।

**नरनारिषण्डौ**–शा. २–१७. नरषण्डो नारिषण्ढश्चेति नरनारिषण्डौ एतावबीजौ ज्ञेयौ यदुक्तं सुश्रुते 'अशुक्रस्त्वेव षण्डकः'

**नस्तः**–सू. १३–२५. नासिकातः।

**नस्तः कर्म**–सि. ९–८. नासिकारन्ध्रेणौषधदानम्; प्रतिमर्शावपीडनस्य प्रधमनशिरोविरेचनानि नावनश्चावपीडश्च च्यवनं धूम एव च। प्रतिमर्शश्च विज्ञेयं नस्तःकर्म च पञ्चधा॥

**नस्तः प्रच्छर्दनम्**–सू. १–८५. शिरोविरेचनम्।

**नस्यम्**–सि. ९–८७. नस्यं तत् कथ्यते धीरैर्नासाग्राह्यं यदौषधम्। प्रतिमर्शोऽवपीडश्च नस्यं प्रधमनं तथा। शिरोविरेचनं चेति नस्तःकर्म च पञ्चधा॥

**नाडीस्वेदः**– चि. ३०–४८. प्रकारविशेषनिमित्तया नाड्या दीयमानो बाष्पः (व. द.)

**नाभिः**–इ. ३–५. उदरावर्तः (श. क.)

**नाड्यः**–चि. २२–६. नलिकाः; स्रोतांसि।

**नावनम्**–सू. ५–३५. नस्यम्।

**नासापुटम्**–सि. ९–१००. अन्यतरं नासिकारन्ध्रम्।

**नासिका**–इ. ३–५. नासा।

**नासिकावंशः**–इ. ८–१०. नासिकापृष्ठे उन्नतमास्थ्य।

**नास्तिकः**–सू. ११–१४,१५. नास्ति परलोक इत्यादि यो मनुते सः।

**निगदम्**–चि. १२–१४५. पुरातनम्।

**निगदम्**–चि. २४–१७६. निर्दोषम् ।

**निगदम्**–चि. २६–६८. निर्मलम्

**निगमनम्**–वि. ८–२७. तस्मात्तथेतिरूपं निर्णयात्मकं वचनम् ।

**निग्रहः**–वि. ५–१९. शुक्रवेगरोधनम् ।

**निचयात्मकः**– चि. ५–१४. सान्निपातिकः ।

**निजः**–सू. ११–४५. चि. २५–५. शारीरदोषसमुत्थः ।

**निदर्शनम्**–वि. १२–४४. मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः ।

**निदानम्**–सू. ३०–३३. निदानस्थानम् ।

**निदानम्**–नि. १–१,३. निदानं कारणमिहोच्यते, तच्चेह व्याधिजनकं व्याधिबोधकं च सामान्येनोच्यते। तत्र व्याधिजनकं निदानं हेतुः, व्याधिबोधकं च कारणं निदानपूर्वरूपरूपोपशयसंप्राप्तिरूपम् । तत्र हेतुरूपं निदानं जनकं च भवति, व्याधिबोधकं च भवति। किंवा निदानशब्दो जनककारणवचन एव । इह खलु हेतुर्निमित्तमायतनं कर्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम् ॥

**निद्रा**–सू. २१–५८, ५९. स्वापः ।

**निमित्तम्**–सू. १०–१४. हेतुः ।

**निमित्तविपरीतम्**–वि. २–१३. हेतुप्रत्यनीकम् ।

**निमित्तानुरूपा**–इ. १–६. निमित्तार्थानुकारिणी, निमित्तस्य योऽर्थः कार्यजननरूपः, कार्यबोधनरूपो वा तमनुकरोतीति निमित्तार्थानुकारिणी ।

**निमिषः**–इ. ३–६. चक्षुर्निमीलनम् ।

**निमेषः**–चि. २८–९. निमेषणीः शिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयेदति वर्त्मानि निमेषः स गदो मतः ॥ (सु. उ. ३.)

**नियतात्मा**–चि. १–४ | १०. जितेन्द्रियः ।

**नियोगः**–सि. १२–४४. अवश्यानुष्ठेयतया विधानम् ।

**निरत्ययत्वम्**–सि. १०–५. दोष (उपद्रव) रहितत्वम् ।

**निरन्नता**–चि. ५–९. उपवासः । (वै. श.)

**निरामः**–चि. ३–१६८. पक्वः ।

**निरूहः**–क. १२–५३. आस्थापनम् ।

**निरोधः**–सू. ३०–२५. मरणम् ।

**निर्णयः**–सि. १२–४२. विचारितस्यार्थस्य व्यवस्थापनम् ।

**निर्देशः**–सि. १२–४२. संख्येयोक्तस्य विवरणम् ।

**निर्यासः**–सू. २५–४० वृक्षात्स्रुतो रसः ।

**निर्यूहः**–चि. २१–१२३. क्वाथः; रसः । (श. [illegible]क.)

**निर्वचनम्**– सि. १२–४४. पण्डितबुद्धिगम्यो दृष्टान्तः ।

**निर्वलीकम्**–चि. ३–१६. वलीरहितम् ।

**निर्वापणम्**–सू. १८–५. दाहप्रशमनम्, पाकाभिमुखिनो व्रणशोथस्य दाहतोदप्रशमनम् । (व. द.)

**निर्वृताः**–चि. २९–१३९. निर्वापिताः ।

**निर्वृत्तिः**–सू. १–६४. अभिव्यक्तिः ।

**निष्कुलम्**–चि. ११–६६. निरस्थि ।

**निष्क्वाथः**–चि. २६–१४०. क्वाथः ।

**निष्ठीविका**–सू. ८–२१. निष्ठीवनम् ।

**निष्पीडनम्**–चि. २३–३५. पीडयित्वा रसस्य रक्तस्य वा निर्हरणम् ।

**निष्प्रत्यनीकः**–चि. ३–५६. विरोधितारहितः; तुल्य इत्यभिधायापि यत् 'निष्प्रत्यनीकः' इति करोति, तेन कालाद्यनुगुणतामेव कालादितुल्यतां स्फोटयति, कालादीनां चासमानानामपि बलवता दोषेण परिगृहीतानां प्रतीपार्थकरणासामर्थ्येनानुगुणतैव भवति ।

**निःश्वासः**–सू. ७–२४. मुखनासाभ्यां निर्गतः श्वासः ।

**निःसंज्ञः**–इ ९–४. संज्ञारहितः ।

**निस्तोदः**-चि. २१-३०. अतिव्यथा। (वै. श.)

**नीलः**-चि. ४-२०. नीलवर्णः।

**नेत्रनाड्यः**-खि. २-२१. नेत्रगताः रसरक्तादिवाहिन्यः।

**नेत्रम्** (बस्तिनेत्रम्)-खि. १-५५. बस्तिद्रव्यप्रवेशार्थं प्रयुज्यमानो नलिकाविशेषः।

**नेत्राञ्जनम्**-चि. ३-३०७. चक्षुर्म्रक्षणम्।

**न्युब्जा**-शा. ८-६. अधोमुखी।

**पक्ता**-सू. ६-९. जठराग्निः।

**पक्तिः**-सू. १२-११. पचनम्, पाचकस्याग्नेरविकृतं कर्म।

**पक्तिः**-चि. ३-१३०. पक्तिहेतुतया जाठराग्निं ब्रूते।

**पक्तिस्थानम्**-चि. ३-२७५. अग्न्यधिष्ठानम्, ग्रहणी।

**पक्वरसः**-चि. ७-४४. क्वाथः, क्वथितेनेक्षुरसेन कृतः सीधुः वा।

**पक्वाशयः**-शा. ३-६. नाभेरधोभागः। (वै. श.)

**पक्ष्म**-इ. ३-६. अक्षिलोम। (श. क.)

**पङ्कः**-इ. १२-५५. दन्तपङ्कः।

**पङ्गुः**-सि. १-३२ सक्थिद्वयघातोपलक्षितः वातव्याधिविशेषः।

**पचनम्**-वि. १-१७. पाकः।

**पञ्चकर्म**-सू. २-१५. पञ्चकर्म वमनविरेचनास्थापनानुवासनशिरोविरेचनरूपम्।

**पञ्चात्मा**-चि. १४-२४. प्राणापानव्यानोदानसमानरूपः।

**पथ्यम्**-सू. २५-४५. पथ्यं पथोऽनपेतं यद्यच्चोक्तं मनसः प्रियम्। पथः शरीरमार्गात्स्रोतोरूपादनपेतम्; अपेतम् अपकारकम्, अनपेतम् अनपकारकम् इत्यर्थः। पथोग्रहणेन पथोवाह्या दोषा धातवश्च तथा पथोनिर्वर्तका धातवो गृह्यन्ते तेन कृत्स्नमेव शरीरं गृहीतं भवति ततश्च शरीरानुपघाति पथ्यमिति भवति। किंवा स्वस्थस्वास्थ्यरक्षणमातुरव्याधिपरिमोक्षश्चेति पन्थाः तस्मादनपेतं पथ्यम्। एवमपि मनोऽनुपघातित्वं न लभ्यते इत्याह—यच्चोक्तं मनसः प्रियमिति। तेन मनसोऽतिप्रीत्याभिलषितं तेन मनसो हितमिति प्रियार्थः तेन प्रशमज्ञानातीक्ष्णत्वादयो गृह्यन्ते। एतेन "मनःशरीरानुपघाति पथ्यम्" इति पथ्यलक्षणमनपवादमुक्तं भवति।

**पथ्यम्**-सि. १-६०. हितम्

**पदार्थः**- सि. १२-४१. पदस्य पदयोः पदानां वार्थः।

**परः**-शा. ४-७. सारः, किंवा परकालोत्पन्नः परः; शुक्रं हि सर्वधातुभ्यः परमुत्पद्यते।

**परमाणुः**-शा. ७-१७. रजसस्त्रिंशत्तमो भागः। (वै. श.)

**परापरत्वम्**-सू. २६-२९. देशकालवयोमानपाकवीर्यरसादिषु परापरत्वे। परत्वमपरत्वं च तच्च परत्वं प्रधानत्वम् अपरत्वम् अप्रधानत्वं किंवा वैशेषिकोक्ते देशकालाद्यपेक्षया विप्रकृष्टसन्निकृष्टवर्तित्वे परापरत्वे ज्ञेये।

**परासुः**-इ. ३-५. गतप्राणः।

**परिकर्तिका**-चि. १४-८. कर्तनवत् पीडा।

**परिकीर्णाः**-इ. ३-६. मललिप्ताः।

**परिग्रहः**-वि. १-२१ | ४. पुनः प्रमाणग्रहणमेकैकश्येनाहारद्रव्याणाम्। सर्वतश्च ग्रहः परिग्रह उच्यते।

**परिचारकः**-सू. १०-४. उपस्थाता।

**परिणतम्**-चि. २४-९०. चिरकालस्थितम्।

**परिणामः**-सू. २५-४०. परिपाकः। (वै. श.)

**परिणामः**-सू. ११-४२. कालः।

**परिणाहस्रोताः**-सू. १४-४३ परिणाहेन वेष्टनेन स्रोतः रन्ध्रम् यस्याः सा परिणाहस्रोताः।

**परितर्पणम्**-चि. ६-१७. सन्तर्पणम्।

**परिदग्धा**-चि. ३-१०५. दग्धवत् कृष्णवर्णा।

**परिपिण्डितत्वम्**-चि. ५-७. लतासमूहादिवत् संघातेनावस्थितत्वम् ।

**परिबर्हः**-शा. ८-१२. शयनासनपुष्पादिपरिच्छदः ।

**परिबृंहणम्**-सि. ३-२७. पुष्टिः, अभिवृद्धिः ।

**परिमर्दनम्**-चि. २१-१३५. मर्दनम् ।

**परिमाणम्**-सू. २६-३४. मानम् ।

**परिमार्जनम्**-सू. २९-७. शोधनम्, शुद्धिकरणम् ।

**परिम्लानम्**-चि. ५-३८. क्षीणकायम् ।

**परिसर्पः**-चि. २१-११. विसर्पस्य नामान्तरम्, परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात् ।

**परिस्रावाः**-चि. २५-१८. व्रणास्रावाः ।

**परिषेकः**-सू. २०-१३. परिषेचनम् ।

**परिषेचनम्**-सि. १२-१५५. व्रणवेदनोपशान्त्यर्थमुष्णक्वाथसेचनम् । (व. द.)

**परिहारः**-सू. १३-४०. परिहरणम्, त्यागः ।

**परीक्षकः**-सू. २८-३७. श्रुतं बुद्धिः स्मृतिर्दाक्ष्यं धृतिर्हितनिषेवणम् । वाग् विशुद्धिः शमो धैर्यमाश्रयन्ति परीक्षकम् ॥ एवंगुणविशिष्टः शास्त्रानुसारेण हितसमालोचकः परीक्षकः ।

**परीक्षा**-चि. २५-१७. समालोचना ।

**पर्योगः**-सू. १५-७. कटाहः ।

**पर्व**-शा. ७-४. अवयवसन्धिः ।

**पर्वभेदः**-सू. २२-३६. सन्धिभङ्गरोगः, तथा सन्धिवेदना, यथा चालने भङ्गाशङ्का जायते (वै. श.)

**पर्शुका**- इ. ३-५. पार्श्वास्थि (श. क.)

**परुषम्**-सू. १८-७१, कठिनम् ।

**पलम्**-क. १२-९२-चतुष्कर्षमितं मानम्, मुष्टिः, प्रकुञ्चः, चतुर्थिका, बिल्वम्, षोडशिका, आम्रम् ।

**पवनः**-चि. २६-३६. वायुः ।

**पवनेन्द्रियः**-शा. २-१७. शुक्राशयं गर्भगतस्य हत्वा करोति वायुः पवनेन्द्रियत्वम् ।

**पाकः**-सू. २६-११. पचनम् ।

**पाक्यम्**-चि. ३-१९७ शृतम् ।

**पाक्यक्षारः**-चि. २१-१२२ पाकेन सुश्रुतागुक्तेन विधानेन कृतः क्षारः पाक्यक्षारः ।

**पाचनम्**-चि. १५-७५. यवाग्वादि, पचत्यामं न वह्निं च कुर्याद् यत् तद्धि पाचनम् (शा. सं.), पाचनं दोषामयोः शोथस्य वा । (व. द.)

**पाचनीयम्**-सू. १५-७. पाचनम् ।

**पाणिः**-इ. १-२२. हस्तः ।

**पाणितलम्**-चि. १५-१७६. क. १२-२४. कर्षः ।

**पाणिस्वेदः**-चि. २६-१३७. हस्तेन कृतः स्वेदः ।

**पाटनम्**-चि. २५-४९. छेदनम् । (वै. श.)

**पात्रम्**-चि. ५-१७३. आढकः ।

**पादः**-सू. ९-२७. भिषगादीनामेकतमः ।

**पादः**-चि. १-४ | ६५ चतुर्थांशः ।

**पादचर्मणी**-इ. ५-३४. पादयोश्चर्मणी ।

**पादाः**-इ. ११-२७. भिषगादयः ।

**पानकः**-क. १-२६. पानद्रव्यविशेषः (श. क.)

**पानम्**-सू. १-८७. द्रवद्रव्यगलाधःकरणव्यापारः (वै. श.)

**पाप्मा**-चि. ३-१३. ज्वरः पापनिर्वर्त्यत्वात् ।

**पामा**-चि. ७-१३. सास्रावकण्डूपरिदाहकाभिः पामाऽणुकाभिः पिडकाभिरूह्या (सु. नि. ५-१४.) ।

**पायुः**-सि. ७-५८. गुदम् ।

**पारिषद्यः**-सू. १५-७. परिषदि शस्तः ।

**पारुष्यम्**–चि. ९–१०. खरत्वम्।

**पार्थिवः**–सू. १–६८. पृथिवीविकारः।

**पार्ष्णिः**–सि. ३–२९. गुल्फस्याधोभागः। (वै. श.)

**पार्श्वम्**–इ. ३–५. कक्षाधोभागः। (श. क.)

**पार्श्वशूलम्**–चि. ८–१७. पार्श्वदेशस्थं शूलम्। (वै. श.)

**पाषण्डाः**–चि. २३–१६०. कापालिकादयः

**पिचु**–चि. ५–७४ कर्षः।

**पिचुः**–चि. ३०–६१. कार्पासखण्डः औषधाप्लावितः।

**पिचुक्रिया**–चि. ३०–६१. पिचुप्रणयनम्।

**पिचुधारणम्**–चि. १९–४६. भेषजसाधितक्वाथ-स्नेहाप्लुतस्य तूलकस्य वस्त्रखण्डस्य वा योनौ स्थापनम्। (व. द.)

**पिच्छनम्**–सू. १८–४. अत्यर्थपीडनम्।

**पिच्छा**–सू. १८–१४. पिच्छिलो गाढश्च स्रावः।

**पिच्छाबस्तिः**–सि. ५–१६. अल्पया मात्रया निरूहाख्यो बस्तिः।

**पिच्छिलः**–सू. १–६१. विजिल्ल। (व. द.)

**पिडका**–चि. ६–५८. पिटका, व्रणविशेषः (वै. श.)

**पिण्डः**–चि. २१–१०१. वर्तुलाकृतिः। (व. द.)

**पिण्डस्वेदः**–सू. १४–२५. पिण्डरूपः स्वेदः।

**पिण्डिका**–इ. ६–१३. सि. ३–२९. जङ्घामांस-पिण्डिका।

**पिण्डितम्**–चि. ५–४३. पिण्डरूपम्।

**पित्तम्**–सू. १२–११. शरीरस्थधातुविशेषः। (श. क.)

**पित्तम्**–सि. ६–७९. शोणितगतं पित्तं रक्तपित्तमिति यावत्।

**पित्तस्थानम्**–चि. २१–४५. मध्यशरीरम्।

**पित्तासृक्**–चि. ४–२९. रक्तपित्तम्।

**पिष्टम्**–चि. २१–८१. पिष्टिः।

**पिष्टस्वेदनम्**–चि. १–२ | १४. अधश्छिद्रयुक्तो घटः।

**पिष्टान्नम्**–वि. ७–१२. पिष्टेन कृतमन्नम्।

**पिहितः**–चि. ३०–२७. अवरुद्धः।

**पीठसर्पी**–सि. २–२१. पङ्गुः।

**पीडनम्**–सू. २०–४. पीडा।

**पीडा**–सि. ९–३. रुजा।

**पीनसः**–चि. ८–६५. नासिकारोगविशेषः।

**पुटपाकः**–सि. ९–११५. पुटपाको हि शालाक्ये स्नेहन-लेखन-प्रसादनभेदात् त्रिविध उक्तः।

**पुण्डरीकम्**–चि. ७–१३. कुष्ठभेदः।

**पुनरागतः**–चि. ३–३३५. पुनरावृत्तः।

**पुनरावर्तकः**–चि. ३–३४३. पुनरावृत्तो ज्वरः।

**पुनर्भवः**–सू. ११–६. जन्मान्तरम्।

**पुराणज्वरः**–चि. ३–१७२. जीर्णज्वरः।

**पुरीषजननः**–सू. २५–४० पुरीषोत्पादकः।

**पुरीषम्**–सू. ७–३. विष्ठा।

**पुरीषवाहीनि स्रोतांसि**–वि. ५–८. मलवहनाड्यः।

**पुरीषविरजनीयः**–सू. ४–८ पुरीषस्य विरजनं दोष-सम्बन्धनिरासं करोतीति (व. द.)

**पुरीषसंग्रहणीयः**–सू. ४–१५ | ३१. पुरीषस्य संग्रहं रोधं करोतीति।

**पुरीषस्रंसनम्**–चि. ८–८८. द्रवपुरीषनिर्गतिः।

**पुरीषाधानम्**–शा. ३–६. पक्वाशयः।

**पुरुषः**–शा. १–३९. आत्मा।

**पुरुषः**–शा. ५–४. षड्धातवः समुदिताः 'पुरुष' इति शब्दं लभन्ते।

**पुरुषः (विषसंज्ञितः)**–चि. २३–४. स पुरुषः विषमुच्यते विषादनाद्धेतोः ।

**पुरुषकारः**–वि. ३–३०. इह जन्मनि कृतं कर्म सामान्येनोच्यते, स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ।

**पुष्टिः**–चि. २४–९. मांसादीनामुपचयः ।

**पुष्टिकरः**–सू. २५–४०. मांसाद्युपचयकरः ।

**पूपलिका**–वि. ७–२१. चापडिकेति ख्याता ।

**पूपाः**–सू. २७–२६७. पिष्टिकाः ।

**पुष्पनेत्रम्**–सि. ९–५०. पुष्पनेत्रमित्युत्तरबस्तिनेत्रस्य संज्ञा ।

**पुष्पम्**–इ. १–२१. नखदन्तेषु अरिष्टलक्षणम् ।

**पुष्पम्**–शा. ८–५. आर्तवदर्शनम् ।

**पुंसवनम्**–शा. ८–१९. पुत्रजनकं विधानम् ।

**पुंस्त्वम्**–सू. २५–४०. शुक्रम् ।

**पुंस्त्वोपघाति**–सू. २५–४०. शुक्रक्षयकरम् । (व. द.)

**पूति**–वि. ७–१२. शटितम् ।

**पूतिः**–वि. ८–९७. दुर्गन्धः ।

**पूतिनस्यम्**–चि. ४–२६. नासाया दुर्गन्धता ।

**पूपवर्तिः**–चि. २४–१२६. वर्त्याकारा पूपलिका ।

**पूर्वपक्षः**–सि. १२–४३. प्रतिज्ञातार्थसंदूषकं वाक्यम् ।

**पूर्वरूपम्**–नि. १–६. चि. २८–१९. अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् । उत्पित्सुरामयो दोषो विशेषेणानधिष्ठितः । लिङ्गमव्यक्तमल्पत्वाद् व्याधीनां तद्यथायथम् ॥ (मा. नि.)

**पृथक्त्वम्**–सू. २६–३३. 'इदं द्रव्यं पटलक्षणं घटात् पृथक्' इत्यादिका बुद्धिर्यतो भवति, तत् पृथक्त्वं भवति ।

**पृथुत्वम्**–इ. ८–१०. महत्त्वम् । (श. क.)

**पृष्ठेषिका**–इ. ३–५. पृष्ठवंशः ।

**पृष्ठम्**–इ. ८–२२. शरीराधोभागः ।

**पेयम्**–सू. २७–२०४. पानम् ।

**पेयम्**–इ. ९–११. जलम् । (श. क.)

**पेया**–क. २–५. अल्पसिक्थपेयद्रव्यम् । (शा. क.)

**पेयादिक्रमः**–सि. ६–२३. संसर्जनक्रमः ।

**पेयामण्डः**–चि. ८–१२७. पेयाया उपरि अच्छो भागः ।

**पेशी**–चि. २४–१८३. फलगतं सस्यं ।

**पेष्याः**–सि. ३–४०. कल्कीकृताः ।

**पैत्तिकः**–चि. ३–१४४. पित्तजो व्याधिः ।

**पौत्तिकम्**–सू. २७–२४३. पिङ्गला मक्षिका महत्यः पुत्तिकाः तद्भवं मधु पौत्तिकम् ।

**पौरुषम्**–सू. ३०–२४. उत्कृष्टं कर्म ।

**पौरुषम्**–चि. २४–६१. शुक्रम् ।

**पौर्वदेहिकम्**–सू. ११–३१. पूर्वदेहकृतम् ।

**पौष्करम्**–सू. २६–८४. पुष्करपत्ररूपं शाकम् ।

**पौष्टिकी**–चि. १–१ | ३०. बृंहणी ।

**प्रकाशः**–सू. २६–११. दीप्तिः ।

**प्रकुञ्चः**–क. १२–९२. पलम् ।

**प्रकृतिः**–सू. ९–४. आरोग्यम् ।

**प्रकृतिः**–सू. २१–१२. देहजनकं बीजम् ।

**प्रकृतिः**–चि. १–३. २१–१. तत्र प्रकृतिरुच्यते स्वभावो यः । सपुनराहारौषधद्रव्याणां स्वाभाविको गुर्वादिगुणयोगः ।

**प्रकृतिः**–सू. २१–५७. स्वभावः । यथा स्वभावादेव केचिदनिद्रा भवन्ति ।

**प्रकृतिः** इ. ६-२४. स्वभावः सुशीलत्वादिरूपः किंवा जन्मप्रतिबद्धा श्लेष्मप्रकृत्यादिरूपा।

**प्रकृतिः**-चि. ३-१२. स्वभावः, तथा यत्कारणमयं कार्यं भवति तदुच्यते।

**प्रकृतिः**-(तृतीया) शा. २-२५. नपुंसकः।

**प्रकृति-स्थापनम्**-चि. ९-१३. चिकित्सितम्।

**प्रकोपः**-सू. १२-५. वातादीनां स्वक्षोभहेतुः।(वै.श.)

**प्रकोपणम्**-सू. १२-३. प्रकोपकारकम्

**प्रक्लिन्नम्**-चि. २१-३०. गलितं, शटितम्।

**प्रक्लेदि**-वि. १-१६. क्लेदयुक्तम्।

**प्रक्षालनम् (एतत्)** चि. २१-९८. एतैः प्रक्षालनार्थः क्वाथः कर्तव्यः।

**प्रक्षेपः**-सू. ७-३७. हितस्य सेवनम्।

**प्रघर्षः**-सू. ३-२९. शरीरोद्वर्तनम्।

**प्रघर्षणम्**-सि. १२-१५५. प्रघर्षः।

**प्रच्छनम्**-चि. ७-४०. ऋज्वसंकीर्णं सूक्ष्मं सममनवगाढमनुत्तानमाशु च शस्त्रं पातयेन्मर्मसिरास्नायुसन्धीनां चानुपघाति। (सु. सू. अ. १४-२६)

**प्रच्छर्दनम्**-सू. ७-१५. वमनम्।

**प्रच्छादनम्**-चि. २५-९५. प्रावरणम् (श. क.)

**प्रच्छिन्नम्**-इ. १०-१२. प्रच्छिन्नमिव प्रच्छिन्नं, छेदनाकारवेदनायुक्तत्वात्।

**प्रजननम्**-सू. २८-४. लिङ्गम्।

**प्रजास्थापनः**-सू. ४-१८ | ४८. एकोनपञ्चाशत्तमो महाकषायः; प्रजोपघातकं दोषं हत्वा प्रजां स्थापयति (व. द.)

**प्रजीर्णम्**-शा. १-१११. विदग्धम्।

**प्रज्ञापराधः**-सू. ७-५२. बुद्धेः अपराधः, अज्ञान-दुर्ज्ञाने।

**प्रज्ञापराधः**-शा. १-१०२, धीधृतिस्मृतिविभ्रष्टः कर्म यत् कुरुतेऽशुभम्। प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपणम्॥ बुद्ध्या विषमविज्ञानं विषमं च प्रवर्तनम्। प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत्॥

**प्रज्ञाविपर्यासः**-इ. ४-२६. प्रज्ञाविपर्यासैरिति शेषीभूतासु प्रभावकृतः प्रज्ञाविपर्यासः।

**प्रणाडी**-सि. ९-१०३. नस्यदाननलिका।

**प्रतापः**-सू. १८-५. प्रभावः।

**प्रतिकर्म**-इ. १२-५८. चिकित्सितम्।

**प्रतिकारयेत्**-चि. २४-१०७. चिकित्सां कुर्यात्।

**प्रतीघातः**-चि. ३०-१६८. वेगनिरोधः।

**प्रतिच्छाया**-इ. १-३. देहच्छाया।

**प्रतिपत्तिः**-सू. ७-५५. उपदिष्टार्थस्य सम्यगवबोधः।

**प्रतिपत्तिः**-वि. ४-११. कर्मणां यथार्हतया अनुष्ठानम्।

**प्रतिभा**-सू. २७-३४९. प्रज्ञा।

**प्रतिभानम्**-वि. ८-१८. बुद्धिः।

**प्रतिमर्शः**-सि. ९-८९. नस्तःकर्म।

**प्रतिरूपकाः** सू. ११-५१. वैद्यसदृशाः।

**प्रतिलोमानुलोमगाः**-इ. ७-२० अधोमार्गोर्ध्वमार्गगताः।

**प्रतिवादः**- सू. २५-२७. प्रतिपक्षः।

**प्रतिवापः**-सि. १०-१७. कषाये चूर्णादिप्रक्षेपः। (वै. श.)

**प्रतिविनीतम्**-सू. १५-१७. आलोडितम्।

**प्रतिषेधः**-वि. ४-८. व्यावृत्तिः।

**प्रतिसारणम्**-चि. २३-३६. व्रणघर्षणम् (वै. श.)

**प्रतुदाः**-सि. १२-१८ | ४. प्रतुद्य बहुधाऽभिहत्य भक्षयन्ति इति।

**प्रत्यक्षम्**-सू. ११-२०. आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्तते। व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते॥ इह च प्रत्यक्षफलरूपापि बुद्धिः प्रत्यक्षशब्देनाभिधीयते, तथैव लोकव्यवहारात्; परमार्थतस्तु यतो भवतीन्द्रियादेरीदृशी बुद्धिस्तत् प्रत्यक्षम्।

**प्रत्यक्षम्**-वि. ४-४. यदात्मना इन्द्रियैः चक्षुरादिभिः अव्यवधानेन गृह्यते रूपादि तत्प्रत्यक्षमिति बाह्यप्रत्यक्षं गृह्णाति, मनसाऽव्यवधानेन यदुपलभ्यते सुखादि तच्च मानसं प्रत्यक्षं गृह्णाति।

**प्रत्यनीकम्**-सि. १-३५. विपरीतम् ।

**प्रत्ययः**-सू. १-६४. निमित्तकारणम् ।

**प्रत्याख्येयः**-सू. १०-१९. प्रत्याख्यातुं योग्यः असाध्यभेदः असाध्यत्वकथनपुरःसरं चिकित्स्यः ।

**प्रत्यात्मनियता**-इ. १-५. प्रतिपुरुषभिन्ना ।

**प्रदेशः**-सि. १२-४२. यद् बहुत्वादर्थस्य कार्त्स्न्येनाभिधातुमशक्यमेकदेशेनाभिधीयते ।

**प्रदेशिनी**-चि. २८-१०३. अङ्गुष्ठानन्तराऽङ्गुली ।

**प्रदेहः**-सू. ११-५५. लेपस्य भेदः प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च । (सु. सू. १८-६.)

**प्रदोषम्**-शा. ४-३०. प्रदोष इत्यत्र प्रशब्देन दुष्टिप्रकर्षं प्रकृष्टवन्ध्यतारूपकार्यजनकं दर्शयति ।

**प्रधमनम्**-सि. ९-९६. नस्यविशेषः (वै. श.)

**प्रध्मापनम्**-सि.९-१०७. प्रधमननस्यदानम् ।

**प्रपचनम्**-वि. ८-३६. पाकः ।

**प्रपन्नः**-शा. २-१४. आगतः ।

**प्रपाणिकौ**-इ. ८-२६. मणिबन्धादूर्ध्वं कूर्परपर्यन्तं द्वयोर्भुजयोर्भागौ ।

**प्रबाधकम्**-चि. ७४-६४. निवर्तकम्, निवारकम् प्रशामकम् ।

**प्रभवः**-शा. १-५३. कारणम् ।

**प्रभा**-इ. ७-१४. वर्णप्रकाशिनी, प्रकृष्टा दूरात् प्रकाशते इतिलक्षणद्वयविशिष्टः कान्तिविशेषः ।

**प्रभावः**-सू. २६-६७. अचिन्त्या द्रव्यशक्तिरभिप्रेता रसादिकार्यत्वेन या नावधारयितुं शक्यते ।

**प्रभावः**-वि. १-४. प्रकृष्टो भावः प्रभावः शक्तिरित्यर्थः, सचेह्याचिन्त्यश्चिन्त्यश्चग्राह्यः, रसादिसाम्ये यत् कर्म विशिष्टं तत् प्रभावजम् । (व. द.)

**प्रभावतत्त्वम्**-वि. १-९. प्रभावतात्पर्यम् ।

**प्रमथ्या**-सि. ७-१०. प्रमथ्या प्रोच्यते द्रव्यं पलमात्रं सुकल्कितम् । किञ्चिदन्येन संयुक्तमथवान्यविवर्जितम् । तोये चाष्टगुणे साध्यं पानमाहुः पलद्वयम्॥(वै. श.)। प्रमथ्येतिपाचनकषायस्यायुर्वेदसमयसिद्धसंज्ञा ।

**प्रमथ्या**-चि. १९-२९. पाचनदीपनीयः कषायः।

**प्रमाणम्**-वि. ४-७. देहपरिमाणम् । (वै. श.)

**प्रमाणवन्ति**-चि. १४-१७. महाप्रमाणानि ।

**प्रमाथि**-सू. ७-९. अनुलोमनम् ।

**प्रमिताशनम्**-चि. १४-१२. अत्यल्पाशनम् ।

**प्रमिताशनम्**-सू. १५-१५. एकरसाभ्यासः ।

**प्रमिताशनम्**-चि. ११-८. एकरसाभ्यासः किंवा अतीतकालभोजनम् ।

**प्रमीलकः**-सू. २३-७. सततं प्रध्यानम् ।

**प्रयोगः**-सू. २४-५६. प्रयुक्ति; उपयोगः ।

**प्रयोगः**-सू. ५-३७. प्रायोगिकधूमः ।

**प्रयोजनम्**-सि. १२-४२. यदर्थं कामयमानः प्रवर्तते ।

**प्ररोहः**-सू. १-७४. अङ्कुरः।

**प्रलयः**-चि. ३-५. मरणम् ।

**प्रलापः**-सू. १७-५२. अनर्थकं वचः ।

**प्रलुञ्च्य**–चि. ७-२५. निस्तुषीकृत्य।

**प्रलेपः**–सू. २१-४६. कफादिभिः लिप्तता।

**प्रवाहणम्**–चि. १२-९६. कुन्थनम्, मलादिनिष्कासनार्थं प्रयत्नः।

**प्रवाहिका**–चि. १९-३४. वायुर्विबद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य। प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः॥ (सु. उ. अ. ४०-१३८.)

**प्रवृत्तिः**–चि. ३-१४. प्रथमाविर्भावः।

**प्रवृत्तिः**–वि. ८-६८. प्रवृत्तिस्तु खलु चेष्टा कार्यार्था सैव क्रिया, कर्म यत्नः कार्यसमारम्भश्च।

**प्रवेणी**–सू. ६-१५. गोणी।

**प्रशमः**–सू. १७-११४. चि. २१-४०. शमनम्।

**प्रशमः**–सू. ३०-१४. शान्तिः।

**प्रशमनम्**–सू. २५-४०. शमनकरम्।

**प्रसङ्गः**–सि. १२-४३. पूर्वाभिहितस्यार्थस्य प्रकरणागतत्वादिना पुनरभिधानम्।

**प्रसन्नम्**–सू. २७-२१७. निर्दोषम्।

**प्रसन्ना**–चि. २६-१८. मद्योपरि स्वच्छो भागः

**प्रसहाः**–सू. ६-१२. प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः। प्रसहा द्विविधा मांसादा व्याघ्रश्येनादयः, तथा अमांसादाश्च गवादयः।

**प्रसादः**–सू. २७-३४९. प्रसन्नता (श. क.)

**प्रसारणम्**–शा. ७-१६, चि. २८-९. नैयायिकाभिमतपञ्चविधकर्मान्तर्गतकर्मविशेषः, अधिकदेशसंयोगकरणम्।

**प्रसेकः**–शा. ८-३६. अल्पत्वेन बिन्दुशो वा क्षरणम्।

**प्रसेचनम्**–चि. ७-१५९. परिषेकः।

**प्रस्कन्दनम्**–चि. ३-२३०. विरेचनम्।

**प्रस्राविणी**–चि. २३-१५८. स्रावशीला।

**प्रसृतः**–क. १२-९१. द्वे पले प्रसृतं विदुः।

**प्रस्तरः**–सू. १४-४२. प्रस्तीर्यते इति प्रस्तरः शयनप्रमाणेन स्वेदवस्तूनां विस्तरणम्।

**प्रस्थः**–चि. २२-४३. क. १२-९४. षोडशपलप्रमाणः।

**प्रस्रंसनम्**–चि. ५-१८४. विरेचनम्।

**प्राग्भक्तम्**–चि. ५-८१. भोजनस्य प्राक्, परिणामेन वा यथा भोजनात्प्रत्यासन्नं भवति।

**प्राक्**–सू. २५-१८. सर्गादौ।

**प्राग्रूपम्**–चि. २२-८. पूर्वरूपम्।

**प्राणवाहीनि स्रोतांसि**–वि. ५-८. प्राणसंज्ञकवातवहानि स्रोतांसि।

**प्राणः**–सू. १२-८. मूर्धोरःकण्ठजिह्वास्यनासिकासंचारी ष्ठीवनक्षवथूद्गारश्वासाहारादिकर्मकारी वायुविशेषः; यो वायुर्वक्त्रसंचारी स प्राणो नाम देहधृक्। सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते॥ प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान्गदान्। (सु नि. १-१३.)

**प्राणाचार्यः**–चि. १-४ | ४०. वैद्यः।

**प्राणाः**–चि. २८-१२. जीवितम्, अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः (सु शा. ४-३.)

**प्राणापानौ**–शा. १-७०. उच्छ्वासनिःश्वासौ।

**प्राणाभिसरः**–सू. ९-१८, २९-४. प्राणान् गच्छतो व्यावर्तयतीति प्राणाभिसरः; तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्मदर्शने। भिषक् चतुष्टये युक्तः प्राणाभिसर उच्यते॥

**प्राणायतनम्**–सू. २९-३. शा. ७-९. नाभ्यादयः प्राणस्थित्याधाराः (वै. श.)। दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्॥ दशप्राणायतनानि; तद्यथा मूर्धा, कण्ठः, हृदयं, नाभिः, गुदं, बस्तिः, ओजः, शुक्रं, शोणितं, मांसमिति।

**प्राणैषणा**-सू. ११-३. प्राणो जीवितं, तत् साध्यते दीर्घत्वेन रोगानुपहतत्वेन चानयेति प्राणैषणा ।

**प्रादुर्भावः**-शि. ९-५. आविर्भावः (श. क.)

**प्रायश्चित्तम्**-चि. १-१ | ३३. चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् । प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥ विद्याद्भेषजनामानि ।

**प्रायोगिकी**-सू. ५-२४. नित्यपेयधूमवर्तिसंज्ञा ।

**प्रीणनः**-सू. २५-४०, २७-३१२. तृप्तिकरः ।

**प्रेरणम्**-सू. २०-५. कारणम् ।

**प्रोक्षणम्**-शा. ५-१०. जलावसेचनम्, जलबिन्दूनामवकिरणम् ।

**प्लीहा**-वि. ५-८. कुक्षिवामपार्श्वस्थमांसखण्डम् । (श. क.)

**फलम्**-सू. २५-२०. कार्यफलं पुनस्तद् यत्प्रयोजना कार्याभिनिर्वृत्तिरिष्यते ।

**फलवत्**-चि. २-४ | ५०. प्रजोत्पत्तिकरम् ।

**फलवर्तिः**-सि. ७-१०. गुदादौ प्रयुज्यमाना औषधद्रव्यवर्तिः ।

**फलसारिकम्**-चि. २-४ | १८. दाडिमामलकादिफलसारसंस्कृतम् ।

**फाणितम्**-सू. १५-७. पाकात् किञ्चित् घनीभूतम् ।

**फाण्टम्**-सू. ४-७. क्षिप्त्वोष्णतोये मृदितं तत् फाण्टं परिकीर्तितम् ।

**फेनसङ्घातः**-सू. १९-४. फेनराशिः ।

**फेनिलम्**-सू. १९-४ | १. सफेनम् ।

**बलकरम्**-सू. २५-४०. बलजनकम् ।

**बलजननम्**-शि. १२-१६. बलोत्पादकम् ।

**बलदः**-सि. ३-४३. शक्तिदः

**बलम्**-वि. १-३. व्यायामानुमेया शक्तिः, उत्साहः, उपचयः, ओजः, शरीरसंरक्षणी शक्तिः ।

**बल्यम्**-सू. १-१०७. बलाय हितम्, बलकरम् ।

**बलवर्धनम्**-सि. ४-११. बलोपचयकरम् ।

**बलिः**-सू. ३०-२१. उपहारः

**बस्तिः**-सू. १-८७. बस्तिकर्म, चर्मपुटकद्वारेण गुदाध्वना क्वाथादिप्रदानरूपः कर्मविशेषः स द्विविधः अनुवासननिरूहभेदात् । स्नेहबस्तिरनुवासनं कषायबस्तिर्निरूहः । (व. द.)

**बस्तिः**-सू. ११-४८. मूत्राशयः ।

**बस्तिः**-सि. ३-१०. मूत्राशयपुटकम् ।

**बस्तिकर्म**-सू. ७-७. पञ्चकर्मणामन्यतमम् ।

**बस्तिद्वारम्**-सि. ९-४१. मूत्राशयद्वारम् ।

**बस्तिनियमः**-वि. ६-१६. बस्तौ यथोक्तनियमसेवा, किंवा बस्तिनियमशब्देन कर्म-काल-योगरूपं बस्तिसंख्यानियमं कर्तव्यतया दर्शयति ।

**बस्तिनिबन्धनम्**-सि. ३-१०. बस्तिनिबन्धनार्थमुपयुक्ता कर्णिका ।

**बस्तिनिर्लेखनम्**-सि. ७-५५. वायुना च तीक्ष्णेन बस्तिकर्षणम्, बस्तिकर्मजन्यं घर्षणम् ।

**बस्तिनेत्रम्**-सू. १५-७. बस्तिनलिका ।

**बस्तिशीर्षम्**-इ. १०-१२. बस्त्यूर्ध्वभागः ।

**बहलम्**-सू. २२-१३. घनम् ।

**बहिःपरिमार्जनम्**-सू. ११-५५. बाह्यम् परिमार्जनम्-शोधनम्-रोगदूरीकरणम् । यत्पुनः बहिःस्पर्शमाश्रित्याभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्दनाद्यैरामयान् प्रमार्ष्टि तद् बहिःपरिमार्जनम् ।

**बाधनम्**-चि. १-१ | ५. स्वल्पमपथ्यं तदात्वमात्रबाधकम् ।

**बाह्यकर्म**-सू. ११-५६. बाह्यपरिमार्जनम् ।

**बाह्यरोगमार्गः**–सू. ११–४८. रक्तादिधातुस्वरूपः शाखाभिधो रोगमार्गः ।

**बिडालकः**–चि. २६–२३१. नेत्रबहिर्लेपः शालाक्ये उच्यते ।

**बिडालपदकम्**–चि. १३–१६०. कर्षः ।

**बिल्वः**–वि. ७–२६. पलम् ।

**बीजम्**–शा. २–१८. शुक्रशोणितम् ।

**बीजग्रहणम्**–शा. २–१३. शुक्रस्य योनौ निषिक्तस्यानिःसरणम् ।

**बीजाभिसंस्कारः**–सू. १२–८. बीजस्य शाल्यादेः अभिसंस्कारोऽङ्कुरजननशक्तिः ।

**बीजोपघातः**–सू. १९–४ | ५. शुक्रोपघातः ।

**बुद्धिः**–सू. २५–४०. सम्यग्बोधनम्, निश्चयात्मकं ज्ञानम् ।

**बुद्धिः**–शा. १–२२. निश्चयात्मकज्ञानवती धीः ।

**बुद्धिः**–शा. १–६३. महच्छब्दाभिधेया ।

**बृहच्छरीरः**–चि. २–४ | ४. महाकायः ।

**बृंहणम्**–सू. १–१०७. देहस्थूलताकरम् । (व. द.)

**बृंहणः**–सू. २७–१०. तर्पणः ।

**बृंहणी** सू. २–२५. बृंहणजननी ।

**बृंहणीयः** सू. ४–८, शा. ८–२७. द्वितीयो महाकषायः ।

**ब्रध्नः**–सू. १४-१७ गुदः ।

**ब्रह्म**–चि. १–१ | ८० मोक्षम् ।

**ब्रह्मचर्यम्**–सू. ११–३५ ब्रह्मचर्यशब्देन इन्द्रियसंयमसौमनस्यप्रभृतयो ब्रह्मज्ञानानुगुणा गृह्यन्ते ।

**ब्राह्मम्**–शा. ४–३ ब्रह्मसत्त्वयुक्तम् ।

**भक्तपाचनः**–सू. २७–१८१. अन्नपाचनः ।

**भक्तिः**–इ. १–३. इच्छा ।

**भक्तोपरोधः**–चि. २२–५२. भक्तच्छेदः ।

**भक्ष्यः**–सू. २५–२६. भक्षणीयः ।

**भगन्दरः**–चि. ४–२७. गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकार्तिकृत । भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो मतः ॥ (मा. नि.) वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकवर्तोन्मार्गिणो यथासंख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदबस्तिप्रदेशदारणाच्च 'भगन्दरा' इत्युच्यन्ते । अभिन्नाः पिडकाः भिन्नास्तु भगन्दराः ॥ (सु. नि. ४–३).

**भग्नः**–सि. ९–३९ प्रतिहतः ।

**भङ्गः**–सि. ९–४० भञ्जाकारवेदना ।

**भञ्जनम्**–सू. १८–४ जर्जरीकरणम् ।

**भस्म**–चि. २३–४७ दग्धकाष्ठादिविकारः, भूतिः ।

**भस्मप्रहरणः**–वि. ३–२३ भस्मायुधः ।

**भाः**–इ. ७–१६ दीप्तिः, भास्तु वर्णप्रकाशिनी, भाः प्रकृष्टा प्रकाशते ।

**भावः**–सू. ११–४२ सम्यगवस्थानम् ।

**भावना**–वि. १–२२–२ द्रवपदार्थेन पुनः पुनः औषधमारणं शोषणं च । (वै. श.)

**भाष्यम्**–वि. ८–३. भाष्यते विवृततया वर्ण्यते इति । (श. क.)

**भिषक्**– सू. १०–४ वैद्यः, भिषङ्नाम यो भिषज्यति यः सूत्रार्थप्रयोगकुशलः यस्य चायुः सर्वथा विदितं स्यात् ।

**भिषकुञ्जरः**–सू. ११–५०. भिषग्वेशचराः ।

**भिषग्जितम्**–वि. ३–४१. औषधम् ।

**भिषग्विद्या**–सू. १२–९. आयुर्वेदः ।

**भिषङ्मानी**-सू. ९-१७. आत्मानमभिषजं भिषक्त्वेन मन्यते इति।

**भूगृहम्**-सू. १४-२८. भूस्वेदार्थं गृहम्।

**भूतगुणाः**-सू. १-५६. शब्दादयः।

**भूतधात्री**-सू. २१-५९. भूतानि प्राणिनः दधाति पुष्णातीति भूतधात्री, धात्रीव धात्री। रात्रिस्वभावप्रभवाया निद्राया नामान्तरम्।

**भूतविद्या**-सू. ३०-२८. भूतानां राक्षसादीनां ज्ञानार्था प्रशमार्था च विद्या। भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म बलिहरणादि ग्रहोपशमनार्थम् (सु. सू. १.)

**भूताधिकारः**-चि. ३-११६. देवादयोऽष्टावुन्मादे भूता उक्ताः तेऽधिक्रियन्ते अस्मिन्निति भूताधिकारः।

**भूतानि**-सू. २५-१३. प्राणिनः।

**भूमिः**-सू. २५-३२. पृथ्वी।

**भृतम्**-सू. ६-१२. भृतं भट्टित्रमिति प्रसिद्धम्। (चक्रः)

**भृष्टः**-चि. २२-३१. भर्जितः।

**भेदः**-सू. १७-४६. भेदनवद्वेदनाविशेषः।

**भेदनम्**-सू. ११-५५. आशयविदारणम्

**भेदनीयः**-सू. ४-८. चतुर्थो महाकषायः।

**भेदप्रकृतिः**-वि. ६-४. भेदकारणम्।

**भेदाग्रम्**-वि. ६-४. भेदसंख्यारूपं परिमाणम्।

**भेदि**-सू. २७-१९१ भेदनशीलम्, मलविबन्धनुदित्यर्थः।

**भेद्यम्**-वि. ८-१३९. अणुशः भेदनार्हम्।

**भेषजम्**-चि. १-१४. "स्वस्थस्योर्जस्करं किंचित् किंचिदार्तस्य रोगनुत्" इति द्विरूपमौषधशब्दवाच्यम्।

**भेषजम्**-सू. १०-३ औषधम्, चिकित्सितम्, व्याधिहरम्, पथ्यम्, साधनम्, प्रायश्चित्तम्, प्रशमनम्, प्रकृतिस्थापनम्, हितम्।

**भेषजसमुदायः**-सू. १०-५. औषधसमूहः।

**भेषजसंग्रहः**-चि. २६-१३३. भेषजाभिधायको ग्रन्थः।

**भेषजसंयोगः**-चि. ३-१५१. औषधेन मिश्रत्वं संस्कृतत्वं सिद्धत्वं वा।

**भैषज्यम्**-सू. १-१३४. भेषजम्।

**भोजनम्**-सू. २५-४०. भक्षणम्, अभ्यवहारः।

**भोज्यम्**-सू. २७-२०४. अकठिन आहारविशेष ओदनादिः।

**भौमः**-वि. १५-१३. पार्थिवः।

**भ्रूः**-इ. ३-५. नयनोर्ध्वभागरोमराजिः।

**भ्रष्टम्**-सू. २७-१९८. पतितम्।

**भ्रंशः**-इ. ३-४. सुदूराधोगमनम्।

**मङ्गलम्**-सू. ३०-२१. शुभम्, शस्तम्।

**मज्जा**-सू. १-६८. अस्थिसारः (श. क.)

**मज्जसारः**-वि. ८-१०८. मज्जा षष्ठो धातुः सारः बलवान् उत्कृष्टो विशुद्धतरो वा यस्मिन्नितरेभ्यो धातुभ्यः स मज्जसारः।

**मज्जवाहीनि स्रोतांसि**-वि. ५-८. मज्जधातुवाहकाः मार्गाः।

**मणिकः**-इ. ३-५. करबाहुसन्धिः।

**मणिसन्धिः**-सि. ९-३३. शिश्नस्य तन्मणेश्च यत्र सन्धानं भवति तत्स्थानम्

**मण्डः**-सू. १३-२२. यवादिसाधितः सिक्थरहितः द्रवद्रव्यविशेषः (वै. श.)

**मण्डलानि**-चि. २८-६४ वर्तुलानि।

**मतिः**–सू. २९–७. बुद्धिः, धीः, प्रज्ञा ।

**मदः**–चि. २४–३४. हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् । विकाराश्च यथासत्त्वं चित्रा राजसतामसाः॥ जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात् । स मद्यविभ्रमो नाम्ना 'मद इत्यभिधीयते॥ (च. चि. २४–४०.) मदमूर्च्छायसंन्यासास्तेषां विशाद्विचक्षणः । यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु ॥ दुर्बलं चेतसः स्थानं यदा वायुः प्रपद्यते । मनो विक्षोभयन् जन्तोः संज्ञां संमोहयेत्तदा ॥ पित्तमेवं कफश्चैवं मनो विक्षोभयन्नृणाम् । संज्ञां नयत्या कुलतां.... ॥ (च. सू. २४—२७–२९.)

**मदात्ययः**–चि. ३–१५४. अतिमद्यपानादिजन्यरोगविशेषः ।

**मदिरा**–सू. २७–१८०. सुरामण्डः ।

**मद्यम्**–चि. २६–६३. सुरा ।

**मधु**–सू. २७–२४५. क्षौद्रम् ।

**मधुजातयः**–सू. २७–२४३. क्षौद्रजातयः ।

**मधुद्रवम्**–चि. ५–१३०. मधुना कृतं द्रवम्, मधु मिश्रयित्वा द्रवीकृतमित्यर्थः ।

**मधुमाणिका**–चि. ९–५०. द्रवत्वाद् द्वैगुण्येन माणिकाया द्विकुडवरूपायाः षोडशपलं भवति ।

**मधुरः**–सू. १–६१, २६–७४. रसविशेषः, भूम्यम्बुगुणबाहुल्यात् मधुरः ।

**मधुरविपाकः**–वि. १–१६. जाठराग्निसंयोगकृतः रसविशेषः ।

**मधुरस्कन्धः**–वि. ८–१३८. मधुरगणः मधुरवर्गो वा षड्विधास्थापनमध्ये मधुरवर्गीयद्रव्यकृतास्थापनविशेषः (वै.श)

**मधुशुक्तम्**–चि. २६–२२७. मधुप्रधानं शुक्तम् । मधु च शुक्तं च इति वा ।

**मधूदकम्**–सू. २७–३२३. मधुमिश्रमुदकम् ।

**मधूलिका**–सू. २७–१९०. मधूलकः गोधूमभेदः तेन निर्वृत्ता सुरा मधूलिका ।

**मध्यम् औषधम्**–क. १२–५५. नातिहीनयोगेन कर्मकारि भेषजम् ।

**मध्यमो रोगमार्गः**–सू. ११–४८. मर्मास्थिसन्धिरूप औषधमार्गभेदः ।

**मध्यः स्नेहपाकः**–क. १२–१०२, १०३. संयाव इव निर्यासे मध्यो दर्वीं विमुञ्चति ।

**मनः**–सू. ३०–२५. अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं 'चेतः' इत्याहुरेके, तदर्थात्मसंपदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम् ।

**मनः**–सि. ९–४. अन्तःकरणम् ।

**मनः**–शा. १–१८. युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् । (योगदर्शनम्)

**मनः**–शा. ३–१३. अस्ति खलु सत्त्वमौपपादुकं; यज्जीवं स्पृक्शरीरेणाभिसंबध्नाति, यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते, भक्तिर्विपर्यस्यते, सर्वेन्द्रियाण्युपतप्यन्ते, बलं हीयते, व्याधय आप्याय्यन्ते, यस्माद्धीनः प्राणाञ्जहाति, यदिन्द्रियाणामभिग्राहकं च 'मन 'इत्यभिधीयते ।

**मनोवहस्रोतः**–इ. ५–४१. वातपित्तश्लेष्मणां पुनः, सर्वशरीरचराणां सर्वाणि स्रोतांस्ययनभूतानि । तद्वदतीन्द्रियाणां पुनः सत्त्वादीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतं च तदेतत् स्रोतसां प्रकृतिभूतत्वान्न विकारैरुपसृज्यते शरीरम् । (व. अ. ५–६.); मनोवहानि स्रोतांसि यद्यपि पृथङ्नोक्तानि, तथापि मनसः 'केवलं चेतनावच्छरीरमयनभूतम्' इत्यभिधानात् सर्वशरीरस्रोतांसि गृह्यन्ते ।

**मनोविघातकरा भावाः**–वि. १–२५ | ६. चित्तोपतापकराश्चित्तविकाराः कामक्रोधलोभमोहेर्ष्याह्रीशोकमानोद्वेगभयोपतापाः ।

**मन्त्रः**–सू. ३०–२१. वेदभेदः । स च मन्त्रस्वरूपभागः । मननात् त्रायते यस्मात्तस्मान्मन्त्रः प्रकीर्तितः ॥ (श. क.)

**मन्थः**–सू. २३–३५. सक्तवः सर्पिषाऽभ्यक्ताः शीतोदकपरिप्लुताः। नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते॥ (रा. नि.)

**मन्दः**–चि. २३–८. मन्दः गुणविशेषः तीक्ष्णविरुद्धः।

**मन्दकम्**–सू. २५–४० मन्दजातं दधि।

**मन्दाग्निः**–वि. ६–१२ स्वल्पापचारमपि यो न सहते, स मन्दः अग्निः।

**मन्दाग्निः**–सू. १३–३८ मन्दः पाचनासमर्थः अग्निः यस्य सः।

**मन्दः अनलः**–चि. ९–३८. अग्निमान्द्यम्।

**मन्या**–सि, ९–८४ ग्रीवासिराद्वयम्।

**मरणम्**–सू. ३०–२५. मृत्युः। स्वभावः प्रवृत्तेरुपरमो मरणमनित्यता निरोध इत्येकोऽर्थः।

**मर्दनम्**–सू. १८–१० अङ्गमर्दनम्।

**मर्म**–चि. १७–९१ हृदयादीनि।

**मर्म**–चि. २१–२६. हृदयम्।

**मर्माणि**–सू. ११–४८ मारयन्ति इति मर्माणि। मर्माणि पुनर्बस्तिहृदयमूर्धादीनि। तानि मर्माणि पञ्चात्मकानि भवन्ति; तद्यथा–मांसमर्माणि, सिरामर्माणि, स्नायुमर्माणि सन्धिमर्माणि चेति। न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्माणि भवन्ति, यस्मान्नोपलभ्यन्ते। (सु. शा. ६–३.)

**मर्मसंज्ञकानि स्रोतांसि**–सि. ९–४ नहि स्रोतसां मर्मत्वमस्ति; किंवा स्रोतोमर्मशब्देन सिरामर्मग्रहणं किंवा मर्मसंबद्धानि मर्मपोषकाणि वा स्रोतांसि मर्मसंज्ञकानि स्रोतांसि।

**मलः**–सू. २२–१९ विट्।

**मलवृद्धिः**–सू. ७–४३ पुरीषस्य स्वमानादधिकता।

**मलशोधनम्**–चि. ६–१६. विट्शोधनम्

**मलाः**–सू. २४–२५. दुष्टदोषाः।

**मलायनानि**–सू. ७–४२. द्वे गुदलिङ्गे, छिद्राणि, द्वे श्रोत्रे, द्वौ नासापुटौ, द्वे अक्षिणी, मुखं, लोमकूपानि एतानि सर्वाणि मलस्यायनानि निर्गमद्वाराणि।

**मस्तिष्कम्**–सि. ९–७९. शिरःस्थो मज्जा।

**मस्तु**–सू. २४–७. दधिमण्डः।

**मस्तुलुङ्गः**–सि. ९–१०१. मस्तिष्कम्, अविलीनघृताकारा मस्तकमज्जा। (सु. शा. १०–४२ डल्हणः)

**महत्**–सू. ३०–३ हृदयम्।

**महागदः**–चि. ८–२७. राजयक्ष्मा।

**महात्ययत्वम्**–चि. ६–७. मज्जादिगम्भीरधात्वपकर्षकत्वेन महाव्यापत्तिकर्तृकत्वादाशुकारित्वाच्च।

**महानिम्नम्**–सू. ११–४८. कोष्ठः।

**महाफलाः**–सू. ३०–१२ येनौजसा वर्तयन्ति प्रीणिताः सर्वदेहिनः। यदृते सर्वभूतानां जीवितं नावतिष्ठते॥ यत् सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः। संवर्तमानं हृदयं समाविशति यत्पुरा॥ यस्य नाशात्तु नाशोऽस्ति धारि यद् हृदयाश्रितम्। यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः॥ तत्फला बहुधा वा ताः फलन्तीव (ति) महाफलाः। (च. सू. ३०–८–११); तत्फला ओजःफला ओजोवहा इति यावत्। एतेन, यथोक्तगुणशालित्वेनौजो महत्; एतद्वहनेन फलन्तीवेति महाफला धमन्य उक्ताः। द्वितीयां निरुक्तिमाह—बहुधा वा ताः फलन्तीति, 'ता हृदयाश्रिता दश धमन्यो बहुधा अनेकप्रकारं फलन्तीति निष्पद्यन्ते; एतेन, मूले हृदये दशरूपाः सत्यो महासंख्याः शरीरे प्रतानभेदाद्भवन्तीत्युक्तम्।

**महाभूतानि**–सि. ९–४. आत्मसंबद्धानि सूक्ष्ममहाभूतानि। (चक्रः)

**महामूलाः**–सू. ३०–८. महत् हृदयं मूलं यासां ताः। तेन मूलेन महता महामूला मता दश (च. सू. ३०–८.)

**महास्नेहः**–सू. १–८५. क्षीरमांसादीनामपि स्नेहतया स्नेहाध्याये वक्ष्यमाणत्वेन, तेषु सर्पिरादीनां भूरिस्नेहवत्त्वेन महत्त्वम् (चक्रः) सर्पिस्तैलं वसा मज्जा सर्वस्नेहोत्तमा मताः (च. सू. १३.)

**महास्रोतः**–सू. ११–४८. कोष्ठः, महानिम्नम्, आमपक्वाशयः, शरीरमध्यम् ।

**महेन्द्रसलिलम्**–चि. १४–१८८. आन्तरिक्षं जलम्

**माक्षिकम्**–सू. २७–२४३. मक्षिकाः पिङ्गलाः तद्भवं माक्षिकम् मधुभेदः ।

**माञ्जिष्ठमेह**–चि. ६–१०. मञ्जिष्ठोदकसंकाशं भृशं विस्रं प्रमेहति । पित्तस्य परिकोपात्तं विद्यान्माञ्जिष्ठमेहिनम् ॥ (च. नि. ४–३३.)

**मात्रा**–सू. २–१५. अनपायि परिमाणम् ।

**मात्राप्रमाणम्**–सू. ५–४. आहारमात्राप्रमाणम् (श. क.)

**मात्राबस्तिः**–सि. ४–५२. ह्रस्वायाः स्नेहमात्राया मात्राबस्तिः समो भवेत् (च. सि. ५–५३) ह्रस्वाया इति अर्धाहःपरिणमनीयायाः । उक्तं हि–" अहोरात्रमहः कृत्स्नं दिनार्धं च प्रतीक्षते उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति " (सू. अ. १३.) इति । सुश्रुतेनापि बस्तिप्रमाणमुक्तः यथा–अनुवासने " तस्यापि विकल्पोऽर्धार्धमात्रावकृष्टोऽपरिहार्यो मात्राबस्तिः (सु. चि. ३५) इति, अनेन च सार्धपलमानो मात्राबस्तिरुक्तो भवति; तत्र हि षट्पलः स्नेहबस्तिरुक्तः, अनुवासनं तु त्रिपलम् ।

**मात्राशी**–सू. ५–३. मात्रां मात्रावदन्नमशितुं भोक्तुम् शीलं यस्यासौ मात्राशी, यदि वा मात्रया अशितुं भोक्तुम् शीलं यस्य स तथा ।

**माधुतैलिकबस्तिः**–सि. ७–२०. मधुतैलाभ्यां कृतो बस्तिः ।

**माधुर्यम्**–वि. १–१४. मधुरत्वम् ।

**माध्वीकम्**–सू. २७–१८८ मधुप्रधानम् ।

**मानसः**–सू. ११–४५. मनसि भवः ।

**मारुतः**–सू. १–५९. वायुः ।

**मारुतनिग्रहः**–सि. ३–४१ वातविबन्धः ।

**मारुताशयः**–चि. २१–४६. पक्वाशयाधःशरीरम् ।

**मार्गशुद्धिः**–चि. ५–६०. स्रोतःशोधनम् ।

**मार्गसंरोधः**–चि. २९–१५५ स्रोतोऽवरोधः ।

**मार्दवम्**–सू. १८–५०. मृदुता ।

**मार्द्वीकम्**–चि. २२–३४. मृद्वीकारसकृतं मद्यम् ।

**मांसम्**–सू. २८–४. रक्तजधातुविशेषः ।

**मांसलः**–सि. ५–६. अतिपुष्टमांसधातुः ।

**मांसवाहीनि स्रोतांसि**–वि. ५–८. मांसवहानि स्रोतांसि ।

**मांससारः**–वि. ८–१०५. मांसमेव सारः उत्कृष्टः विशुद्धतरो धातुः यस्मिन्सः ।

**मिथ्याचारः**–चि. ३०–८. असम्यगाहाराचारः ।

**मिथ्यायोगः**–सू. १–५४. रूपादीनां विरुद्धयोगः । (वै. श.)

**मिन्मिनः**–शा. ३–१५. सानुनासिकाव्यक्तस्वरः ।

**मुक्तः**–शा. ५–२२. प्राप्तमोक्षः । नात्मनः करणाभावाल्लिङ्गमप्युपलभ्यते । स सर्वकरणायोगान्मुक्त इत्यभिधीयते ॥

**मुष्कः**–सि. ९–४. अण्डकोषः ।

**मुष्टिः**–चि. १३–१२१. पलम् ।

**मूकः**–चि. २४–६३. अवाक् ।

**मूकत्वम्**–चि. ३–१०८. मन्दवचनत्वम्, अवचनता वा ।

**मूढगर्भः**–चि. ३३–८६. जडगर्भः(श.क.)। मूढो निरुद्धगतिः । तदुक्तं सर्वावयवसंपूर्णो मनोबुद्ध्यादिसंयुतः । विगुणापानसंमूढो मूढगर्भोऽभिधीयते" इति । (सु. नि. ८–१. डल्हणः)

तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानं-विगुणापानसंमोहितं गर्भं मूढगर्भमित्याचक्षते (सु. नि. ८-३.)

**मूढचेताः**–चि. ९–७. उन्मत्तः ।

**मूत्रग्रहः**–चि. ६–१७. स्तोकं स्तोकं सफेनश्च कृच्छ्रान्मूत्रं करोति यः। तस्य वातसमुत्थन्तु विद्यान्मूत्रग्रहं बुधः ॥ (वै. श.)

**मूत्रम्**–इ. १–१३. आहारस्य सारहीनमलद्रवः, बस्ति-पूरणविक्लेदकृन्मूत्रम् ।

**मूत्रवाहिन्यः नाड्यः**–सि. ९–४. पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः। तर्पयन्ति सदा मूत्रं सरितः सागरं यथा। सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः (सु.नि.३-२९३).

**मूत्रवाहीनि स्रोतांसि**– वि. ५–८. मूत्रवहा नाड्यः

**मूत्रविरजनीयः**–सू. ४–१५/३४. मूत्रस्य विरजनं करोति इति। चतुस्त्रिंशो महाकषायः।

**मूत्रविरेचनीयः**–सू. ४–१५ | ३५. मूत्रस्य विरेचनं करोति इति पञ्चत्रिंशो महाकषायः ।

**मूत्रसंग्रहणीयः**–सू. ४–१५ | ३३. मूत्रस्य संग्र-हणं करोति इति। त्रयस्त्रिंशो महाकषायः ।

**मूत्रस्रोतः**–सि. ९–४३. शेफसि स्थितो मूत्रमार्गः ।

**मूत्राधारः**–सि. ९–४. मूत्रं धारयतीति, मूत्राशय इत्यर्थः; बस्तिः ।

**मूत्राशयः**–चि. २६–४२ मूत्राधारः, बस्तिः ।

**मूर्च्छा** सि. ३–२१. संमोहः ।

**मूर्च्छायः**–चि. ४–२६. मूर्च्छा ।

**मूर्तिः**–शा. ४–१२. काठिन्यम् ।

**मूर्धविरेचनम्**–सू. ५–२७. चि. ३–१७४. शिरोविरेचनम् ।

**मृत्युः**–चि. ३–१३. मृत्युकारणत्वान्मृत्युर्ज्वर एवोच्यते।

**मृत्स्नम्**–चि–१–३ | ५६. मसृणम् ।

**मृदितः**–चि. ४–७७. फाण्टीकृतः ।

**मृदुः**–सू. १२–७, सू. २७–२१७. कठिनविपरीतः, दारुणविपरीतः ।

**मृदु औषधम्**–क. १२–५६. अतीक्ष्णम् औषधम् ।

**मृदुकोष्ठः**–सू. १३–७, क. ७–८. कोमलकोष्ठः ।

**मृदुविरेचनम्**–सू. २५–४० अतीक्ष्णविरेचनम् ।

**मृदुवीर्यम्**–सि. ११–५. अतीक्ष्णवीर्यम् ।

**मृदुस्नेहपाकः**–क. १२–१०२,१०३. अतीक्ष्णस्नेह-पाकः; तुल्ये कल्केन निर्यासे भेषजानां मृदुः स्मृतः ।

**मृद्वीकासवः**–सू. २७–१८८. द्राक्षासवः ।

**मेढ्रम्**–इ. ३–५. शिश्नः, लिङ्गम् ।

**मेदः**–सू. २१–९, चि. १५–१६ शरीरस्थचतुर्थधातुः (वै. श.) सर्वभूतानामुदरेस्थिषु च स्थितः शरीरगतः स्नेह-विशेषः ।

**मेदकः**–चि. ३–२६७. जगलः ।

**मेदःसारः**–वि. ८–१०६. मेदः एव सारः उत्कृष्टः विशिष्टतरो धातुः यस्मिन् सः; मेदस्वी ।

**मेदुरः**–सि. १–३६. मेदस्वी ।

**मेदोवाहीनि स्रोतांसिः**–वि. ५–८. मेदोवहा नाड्यः।

**मेद्यम्**–चि. ३–३०५,–१५–२३३. मेदुरम्, मेदो-जनकं वा।

**मेधा**–सू. २७–३५०, धारणावती धीः ।

**मेध्यम्**–सू. १–१०७. पवित्रम् ।

**मेहः**–चि. ६–३. मेहति क्षरति शुक्रादि अनेनेति। (श. क.)

**मेहनम्**–सू. ७–६. शिश्नः,लिङ्गम् ।

**मैथुनधर्मः**–शा. ३–४/२. व्यवायः ।

**मैरेयम्**–सू. २७–१८७. आसवस्य सुरायाश्च द्वयोरेकत्र भाजने। सन्धानं तद्विजानीयात् मैरेयमुभयाश्रयम् ॥

**मोक्षः**–सू. १–१५. संसारविमोक्षः। मोक्षो रजस्तमोऽभावात् बलवत्कर्मसंक्षयात्। वियोगः सर्वसंयोगैरपुनर्भव उच्यते। (च. शा. १–१४२.)

**मोदकः**–क. १–२३. वटकः।

**मोरटम्**–सू. २७–२३४. पीयूषः सद्यःप्रसूतायाः गोः क्षीरं सप्ताहं यावत्। तदेव सप्ताहात परतः यावत् प्रसन्नतां न गच्छति तावत् मोरटम् इत्युच्यते। वचनं च–क्षीरं सद्यः प्रसूतायाः पीयूषमिति संज्ञितम्। सप्तरात्रात् परं क्षीरं प्रसन्नं न च मोरटम्। इति। विनष्टक्षीरभवं मस्तु मोरटमिति जेज्जटः।

**मोहः**–शा. ७–१९. अहं स्थिरशरीरी एको, ममेदमुपकारकं ममेदमपकारकं इत्यादिरूपः मोहः।

**मोहः**–चि. २३–७४. संज्ञाव्याकुलता संज्ञानाशो वा।

**मौलम्**–चि. २३–१७. मूले भवम्, तत्र जातम् वा; मूलजम्।

**म्लाना**–सू. १७–६७. गतविभवा, नष्टकान्तिः, शिथिलीभूता।

**यकृत्**–वि. ५–८. दक्षिणकुक्षेरधःस्थशरीरावयवविशेषः (वै. शः) कालखण्डः।

**यक्ष्मा**–नि. १–५. ज्वरः यक्ष्मशब्देन च राजयक्ष्मवदनेकरोगयुक्तत्वं विकाराणां दर्शयति।

**यक्ष्मा**–चि. ८–७. राजयक्ष्मा।

**यज्ञोपवीतप्रतिमाः**–चि. १२–९१. यज्ञोपवीतव्याप्यस्थानमात्रव्यापकाः।

**यन्त्रम्**–सू. १२–८. सन्धयः।

**यन्त्रम्**–इ. १२–४५. सिरास्नाय्वादिरूपम्।

**यमकम्**–चि. १९–३६. घृततैले।

**यवागूः**–चि. २६–१५५. उचितावचतुर्गुणतण्डुलचूर्णकृतषड्गुणवारिपक्वा बहुसिक्था उष्णिका (वै. श.)

**यवाग्रजम्**–चि. ५–९६. यवक्षारः।

**यवाग्वादिक्रमः**–वि. ७–१९. संसर्जनक्रमः। प्रथमे द्वितीये तृतीये चान्नकाले पुराणानां लोहितशालितण्डुलानां स्ववक्लिन्ना मण्डपूर्वा सुखोष्णा यवागूः यथाग्निबलं, चतुर्थे पञ्चमे षष्ठे चान्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्ना विलेपी उष्णोदकद्वितीया अस्नेहलवणा अल्पस्नेहलवणा वा, सप्तमे अष्टमे नवमे चान्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्नमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण, दशमे एकादशे द्वादशे चान्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनौदकलवणिकेन नातिसारवता भोज्यम्।

**यापनम्**–चि. ३–३०२. यापनाबस्तिः।

**यापनाबस्तयः**–सि. १२–१६ | १. आयुषः यापनं दीर्घकालानुवर्तनं कुर्वन्ति इति यापनाबस्तयः।

**याप्यम्**–सू. १०–९, १०–३७. असाध्यभेदः। याप्यं त्वनुपक्रमं न भवति, यापनाकर्तृत्वेन किञ्चित्करत्वात। शेषत्वादायुषो याप्यमसाध्यं पथ्यसेवया। लब्धाल्पसुखमल्पेन हेतुनाऽऽशु प्रवर्तकम्॥

**यायावराः**–चि. १/४–३. सर्वदा गमनशीलाः नैकत्रस्थायिनः।

**यावकः**–चि. १–३ | २७. यवान्नम्।

**युक्तिः**–सू. ११–७. बुद्धिः पश्यति या भावान् बहुकारणयोगजान्। युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया॥ (च. सू. ११–२५) बहुकारणयोगो बहूपपत्तियोगः जनिश्चार्थं ज्ञानार्थं, तेन बहूपपत्तियोगज्ञायमानानर्थान् या बुद्धिः पश्यति ऊहलक्षणा सा युक्तिरिति प्रमाणसहायीभूता। एवमनेन भवितव्यमित्येवंरूप ऊहोऽत्र युक्तिशब्देनाभिधीयते; सा च परमार्थतोऽप्रमाणभूतापि वस्तुपरिच्छेदे प्रमाणसहायत्वेन व्याप्रियमाणत्वात्, तथा तथैव ऊहरूपया प्रायो लोकानां व्यवहारादिह प्रमाणत्वेनोक्ता। (चक्रः)

**युक्तिः**–सू. २६–२९,३१. युक्तिश्चयोजना या तु युज्यते(३१)। युक्तिश्चेत्यादौ योजना दोषाद्यपेक्षया भेषजस्य

समीचीनकल्पना। अत एवोक्तं या तु युज्यते; या कल्पना यौगिकी भवति सा तु युक्तिरुच्यते अयौगिकी तु कल्पनापि सती युक्तिर्नोच्यते पुत्रोऽप्यपुत्रवत्। (चक्र.)

**युक्तिः**–वि. ४–४. सम्बन्धः अविनाभाव इत्यर्थः। तेनाविनाभावजं परोक्षज्ञानमनुमानमित्यर्थः (चक्रः)

**युक्तिव्यपाश्रयम्**–सू. १–५८,११–५४. युक्तिः योजना; शरीरभेषजयोः हितो यो योगः तदपेक्षं संशोधनसंशमनादि युक्तिव्यपाश्रयमुच्यते (चक्रः)। युक्तिव्यपाश्रयं–पुनराहारौषधद्रव्याणां योजना।

**युगपत्**–शा. ६–६. एककालम्

**यूकाः**–वि७–१०. बालकृमयः (श. क.) केशश्मश्रुलोमपक्ष्मवासःसु जाता अणवः बहुपादाः कृष्णाः शुक्लाः वा कृमयः।

**यूषः**–चि. २६–२९. मृष्टमुद्गदलानान्तु पलैकेन विपाचितः। पूनापनीतविदलः तनुर्यूषः कृताकृतः॥ (वै. श.)

**योगः**–शा. १–१३७–१३९. योगे मोक्षे च सर्वासां वेदनानामवर्तनम्। मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः॥ आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्तते। सुखदुःखमनारम्भादात्मस्थे मनसि स्थिरे॥ निवर्तते तदुभयं वशित्वं चोपजायते। सशरीरस्य योगज्ञास्तं योगमृषयो विदुः॥

मोक्ष आत्यन्तिक शरीराद्युच्छेदः। निःशेषेति न पुनर्भवति। एतेन, योगे निवृत्ता वेदना पुनर्भवतीति सूचयति। मोक्षप्रवर्तक इति मोक्षकारणम्। (चक्रः)

**योगः**– सि. ६–३१. योगः सम्यक् प्रवृत्तिः स्यात्।

**योगः**– सि. ६–४१. योगो नाम योजना, व्यस्तानां पक्षानामेकीकरणम् (चक्र)

**योगवाहि**–सू. २७–२४९. यस्माच्चानारसवीर्यादिभ्यः पुष्पेभ्य उत्पन्नं तन्मधु तेनानभिव्यक्तनानाशक्तिकमेव। ततश्च येन द्रव्येण वामनीयेन वाऽऽस्थापनीयेन वा द्रव्येण कार्यान्तरकारकेण वा युज्यते तदेव कर्म करोति, समानानुकारिद्रव्यप्रभावितशक्तित्वादिति भावः। चकारोऽत्र हेत्वन्तरसमुच्चये, तेन प्रभावाच्चेति बोद्धव्यम्। तेन सत्यपि नानौषधिसंभवत्वे प्रभावान्न क्षीरमद्यादयो योगवाहिनः; तथा, अनानात्मका अपि शिलाजतुतैलादयो योगवाहिनो भवन्ति। (चक्रः) गृह्णाति योगवाहि द्रव्यं संसर्गिवस्तुगुणान्। पच्यमानं यथैतन्मधुजलतैलाज्यसूतलौहादि॥ (व. द.)

**योनिः**–शा. १–६. जातिः।

**योनिः**–चि. ३०–१३३. कारणम्।

**योनिः**–वि. ४–६. वातादयः।

**योनिः**–चि. २३–३. अधिष्ठानम्।

**योनिदोषः**–चि. ३०–१७. अपत्यपथरोगः।

**योनिशूलम्**–जि. ५–७५. योनिरोगविशेषः।

**रक्तपित्तम्**–चि. ४–४. रोगभेदः।

**रक्तबस्तिः**–सि. ६–८३. रक्तेन बस्तिः।

**रक्तम्**–चि. १५–१६. रुधिरम्।

**रक्तमोक्षः**–सि. ९–२४. शृङ्गालाबूजलौकोभिः सिराव्यधेन वा रक्तावसेचनम्।

**रक्तवाहि अर्शः**–चि. ७–१४८. रुधिरस्राविगुदकीलः।

**रक्तवाहिन्यः धमन्यः**–वि. ७–११. रुधिरवाहिन्यः नाड्यः।

**रक्तवाहिस्रोतांसि**–वि. ५–२४. रुधिरवाहिन्यः नाड्यः।

**रक्तविमोक्षणम्**–चि. १२–१००. शृङ्गालाबूजलौकोभिः सिराव्यधेन वा रक्तावसेचनम्।

**रक्तसारः**–वि. ८–१०४. रक्तमेव सारः उत्कृष्टः विशुद्धतमो धातुः यस्मिन्सः।

**रक्तावसेकः**–चि. ३–२९० रक्तमोक्षः।

**रक्तावसेचनम्**–चि. ३–२८८. रक्तमोक्षणम्।

**रजः**–शा. २–३४; चि. ३०–२५. आर्तवम्।

**रजः**–सू. १–५७. रजोगुणः।

**रजः**–सू. २१–२३. चूर्णम्।

**रजस्वला**–चि. ३०-१६५. आर्तवयुक्ता, पुष्पवती।

**रजोदोषः**–चि. ३०-९५. आर्तवविकारः।

**रसः**–सू. १-६४, २६-२८, २७-७०. रसनेन्द्रियग्राह्यो गुणो रसः। यं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वाविषयं भावमाचक्षते कुशलाः स पुनरुदकादनन्यः।

**रसः**–सि. ३-३५. क्वाथः।

**रसः**–चि. १५-१६. रसधातुः, आद्यो धातुः।

**रसः**–चि. ८-१३३. सि. १२-१९ स्वरसः।

**रसः**–सू. २६-६६. रसो निपाते द्रव्याणाम्। निपाते इति रसनायोगे; रसनेन्द्रियग्राह्यजातिमत्त्वं रसत्वम् (द्र. स.)

**रसः**–सू. २८-४. आहारप्रसादाख्यः।

**रसः**–चि. ८-१३२. मांसरसः।

**रसक्रिया**–चि. २६-२०२. घनीभूतरसस्य संज्ञा, क्वाथादेर्यत् पुनः पाकाद् घनत्वं सा रसक्रिया (व. द.)

**रसनम्**–इ. १-३. जिह्वेन्द्रियम्।

**रसना**–सू. १-६४. जिह्वा।

**रसवाहीनि स्रोतांसि**–वि. ५-८. हृदयस्थदशधमनीनां शाखाप्रशाखाः।

**रसाञ्जनम्**–सू. ५-१५. दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम्। तदा रसाञ्जनाख्यं तत् नेत्रयोः परमं हितम्॥ (वै. श.)

**रसायनविधिः**–चि. १-१/१४. जराव्याधिनाशनविधिः।

**रसायनम्**–सू. ७-४८. रसायनन्तु तज्ज्ञेयं यज्जराव्याधिनाशनम्। यथा मृता रुदन्ती च गुग्गुलुश्च हरीतकी (व. द.) दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः। प्रभावर्णस्वरौदार्यं देहेन्द्रियबलं परम्॥ वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात्। लाभोपायो हि शस्तानां रसादीनां रसायनम्॥

**रसायनी**–वि. ५-९ रसः अयते गच्छति यया सा रसायनी, धमनी, नाडी, सिरा, स्रोतः।

**रसाला**–चि. २-२/२६. सचातुर्जातकाजाजि सगुडार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि॥

**राजयक्ष्मा**–नि. ६-१२; चि. ८-९. तं सर्वरोगाणां कष्टतमत्वाद्राजयक्ष्माणमाचक्षते भिषजः। यस्माद्वा पूर्वमासीद्भगवतः सोमस्योडुराजस्य तस्माद्राजयक्ष्मेति। यद्वा कष्टतमत्वात्तदा 'राजेव यक्ष्मा राजयक्ष्मेति' निरुक्तिर्बोद्धव्या। उडुराजस्येति वचनाद् राजसंज्ञत्वं सोमस्य दर्शयति; ततश्च 'राज्ञो यक्ष्मा राजयक्ष्मा" इति निरुक्तिर्भवति। (चक्र:)

**राजसं सत्त्वम्**–शा. ४-३६. रजोगुणभूयिष्ठं मनः राजसं सदोषम् उच्यते रोषांशत्वात्।

**राजा ह**–सू. ९-१९. हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे। ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः॥

**राजी**–इ. ११-१३. रेखा, पङ्क्तिः।

**राजी**–चि. १३-१९. व्यक्ता सिरा।

**राशिः**–वि. १-२१/४. राशिस्तु सर्वग्रहपरिग्रहौ मात्रामात्रफलविनिश्चयार्थः। तत्र सर्वस्याहारस्य प्रमाणग्रहणमेकपिण्डेन सर्वग्रहः, परिग्रहः पुनः प्रमाणग्रहणमेकैकश्येनाहारद्रव्याणाम्। सर्वस्य हि ग्रहः सर्वग्रहः सर्वतश्च ग्रहः परिग्रह उच्यते। सर्वतः इति प्रत्येकावयवत इत्यर्थः। (चक्रः)

**राक्षसम् (सत्त्वम्)**–शा. ४-३८. अमर्षिणमनुबन्धकोपं छिद्रप्रहारिणं क्रूरमाहारातिमात्ररुचिमामिषप्रियतमं स्वप्नायासबहुलमीर्ष्युं राक्षसं विद्यात्॥

**रुग्णः**–सि. १-३२. सन्धिमुक्तः।

**रुचिकरम्**–सू. २५-४०. रुच्युत्पादकम्।

**रुजा**–चि. २१-३९. पीडा।

**रुधिरम्**–इ. ९-२१. रक्तम्।

**रुद्धमार्गः**–सि. ७–२१. निवारिताधोमार्गः

**रूपम्**–नि. १–९. तत्र लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम् ।

**रूक्षः**–सू. २०–१९. रूक्षस्तद्विपरीतः स्यात् विशेषात् स्तम्भनः खरः। (व. द.) तद्विपरीतः स्निग्धविपरीतः ।

**रूक्षः**–सू. १७–३०. रूक्षं समीरणकरं परं कफहरं मतम् ।

**रूक्षणम्**–सू. २२–१०. रौक्ष्यं खरत्वं वैशद्यं यत् कुर्यात्तद्धि रूक्षणम् ॥

**रेचनम्**–सि. ९–९२. विरेचनम् । विपक्वं यदपक्वं वा मलादि द्रवतां नयेत् । रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा ॥ (व द.)

**रेतः**–चि. ३०–१४६. शुक्रम् ।

**रेतोदः**–सि. ३–४३. रेतः वीर्यम् ददाति यः सः शुक्रजननः शुक्रवर्धनः वा ।

**रेतोदोषः**–चि. ३०–१४८. शुक्रदोषः ।

**रेतोवहाः सिराः**–चि. ३०–१३८. शुक्रवहानि स्रोतांसि ।

**रोगः**–नि.–१–५; चि. ३–११. तत्र व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकारो रोग इत्यनर्थान्तरम्; ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च । एकोऽर्थो नामपर्यायैर्विविधैरभिधीयते ॥

**रोगानीकम्**–वि. ६–१. रोगसमूहः ।

**रोगी**–चि. २२–६१. रोगयुक्तः

**रोगेशः** चि. ८–११३. राजयक्ष्मा ।

**रोचनम्**–वि. १–१८ रुचिकर्तृ ।

**रोपणः**–चि. २९–१६२. रोहणः ।

**रोम**–चि. २३–२३०. लोम, सूक्ष्मबालः, त्वक्छिद्रे जातः सूक्ष्मकेशः ।

**रोमकूपाः**–चि. ४–१७. लोमविवराणि ।

**रोमहर्षः**–नि. १–२१. रोमाञ्चः ।

**लक्षणम्**–नि. १–८. लिङ्गम् ।

**लक्षणम्**–इ ३–४. मरणलक्षणम् ।

**लक्षणनिमित्ता** (विकृतिः)–इ. १–७ | १. तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति दैवात् । हेतुभूतानीति हेतुसदृशानि । तेन दैवमेव नखरेखापद्मादिसामुद्रिकोक्तलक्षणयुक्ते शरीरे राज्यधनगमनवधबन्धनादिरूपविकृतिप्राप्तौ हेतुः । लक्षणानि तु दैवनिमित्तानि बोधकमात्राणि, अतएव दैवादित्युक्तम्; दैवं च प्राक्तनं कर्मोच्यते (चक्रः)

**लक्ष्यनिमित्ता** (विकृतिः)–इ–१–७ | २. लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तं निदानेषु ।

**लघुः**–सू. १–५९. लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा (व. द.) तद्विपरीतः गुरुविपरीतः ।

**लङ्घनम्**–सू. २२–९, १८. यत् किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम् ॥ चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥

**लङ्घनम्**–चि. ३–१४०, १५–७५. उपवासः, अनशनम् ।

**ललाटम्**–इ. ३–५. भालम्

**लवणः**–सू. १–६५. २६–७६ रसविशेषः, तोयाग्निगुणबाहुल्यात् लवणः ।

**लवणम्**–सू. १–७० सैन्धवादि ।

**लवणस्कन्धः**–वि. ८–१४१ लवणरसद्रव्यसमूहः ।

**लसीका**–शा. ७–१५. त्वगन्तरे व्रणगतमुदकम् ।

**लाघवम्**–वि. १–१४ लघुता

**लाघवम्**–सि. ३–१९ शीघ्रक्रियता ।

**लाला**–चि. ६–९ मुखस्रावः ।

**लिङ्गम्**–नि. १–६ प्रादुर्भूतलक्षणं पुनर्लिङ्गम्, व्याधेः स्वरूप लिङ्गयते ज्ञायते अनेन इति लिङ्गम्, आकृतिर्लक्षणं, चिह्नं, संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम् ।

**लिङ्गग्राह्यम्**–शा. १–६२. अनुमानग्राह्यम् ।

**लीनम्**–सि. १–८. श्लिष्टम् ।

**लेखनम्**–चि. २३–१७१. व्रणलेखनम् ।

**लेखनीयः**–चि. २३–१७१. तृतीयो महाकषायः, लिखति इति लेखनीयः,

**लेपः**–चि. ७–१२२. लिम्पति इति लेपः । लेपस्य द्वौ भेदौ–आलेपः प्रदेहश्च । तयोरालेपः आर्द्रमाहिषचर्मवत् शीतलः तनुर्विशोषी च । प्रदेहः आर्द्रः घनः उष्णश्चेति ।

**लेपज्वरः**–इ. ८–२४. स्वल्पशीतयुक्तः कफज्वरः ।

**लेपनम्**–सू. २५–४०. लेपः ।

**लेलीतकः**–चि. ७–७०. पाषाणभेद औत्तरापथिकः, उच्यते हि निघण्टौ "आसीद्दैत्यो महाबाहुर्लेलिहानो महासुरः । योजनानां त्रयस्त्रिंशत् कायेनाच्छाद्य तिष्ठति । विष्णुचक्रेण संछिन्नो पपात धरणीतले । वसा तस्य समाख्याता लेलीतक इति क्षितौ" इत्यादि ।

**लेहः**–चि. ६–४७. लिह्यते इति लेहः, नातिद्रवो नातिघन औषधकल्पभेदः ।

**लोम**–इ. ३–६. रोम ।

**लोमकूपः**–सू. २८–४. रोमकूपः ।

**लोमहर्षः**–चि. ७–११. रोमहर्षः ।

**लौकिकः**–सू. २८–३८. अपरीक्षकः, रजोमोहावृतात्मा, अयथार्थदर्शी ।

**लौल्यम्**–सू. २५–४०. चाञ्चल्यम्, चलचित्तता, लोलुपता ।

**वक्त्रम्**–इ. ८–१७. मुखम् ।

**वक्री**–शा. २–३०. मातुर्व्यवायप्रतिघेन वक्री स्याद्बीजदौर्बल्यतया पितुश्च । मातुर्व्यवायप्रतिघेनेति व्यवायकाले मातुर्व्यवायानिच्छा विषमाङ्गन्यासो वा व्यवायप्रतिघः तेन यस्य शुक्रं गर्भाशयं नियमान्नोपैति स वक्रीत्युच्यते । बीजदौर्बल्यतया च पितुर्वक्री स्यादिति योजना । अत्र दुर्बलस्य कर्म दौर्बल्यं तस्य भावो दौर्बल्यता तेन पितुर्बीजस्य दुर्बलक्रियतयेत्यर्थः । (चक्रः)

**वङ्क्षणः**–इ ३–५. ऊरुसन्धिः । (श. क.)

**वदनम्**–इ. १–१२. मुखम् ।

**वनस्पतिः**–सू. १–७१. फलैर्वनस्पतिः । फलैर्वनस्पतिरिति बिना पुष्पैः फलैर्युक्ता वटोदुम्बरादयः । यदुक्तं हारीते "तेषामपुष्पाः फलिनो वनस्पतय इति स्मृताः" इति । (चक्रः)

**वपावहनम्**–वि–५–८, मेदःस्थानम् । वपा उदरस्था स्निग्धवर्तिका यामाहुर्जनास्तैलवर्तिकेति ।

**वमनम्**–सू.–१–८४ छर्दनम्, तत्र दोषहरणमूर्ध्वभागं वमनसंज्ञकम् । १७–१७

**वमनोपगः**–सू. ४–१३ | १३. वमने छर्दनक्रियायां सहायत्वेनोपगच्छतीति वमनोपगः । त्रयोविंशतितमो महाकषायः ।

**वमिः**–सि. ६–५३ प्रच्छर्दिका । (श. क.)

**वयः**–वि–१–३. आयुषोऽवस्थाविभागः, बाल्यादि ।

**वयः**–वि–८–१२२ वयस्तश्चेति कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था वयोऽभिधीयते ।

**वयःस्थापनः**–सू. ४–१८ | ५० वयस्तरुणं स्थापयति इति । (व. द.) पञ्चाशत्तमो महाकषायः ।

**वर्चोभेदः**–चि. ८–१७. अतिपुरीषप्रवृत्तिः ।

**वर्चोवाहीनि**–वि. ५–२१, वर्चः पुरीषं वहन्ति इति वर्चोवाहीनि

**वर्जनीयः**–सि. १–४. अचिकित्स्यः ।

**वर्ज्यम्**-चि-३-३३३ निषिद्धम्, त्याज्यम् ।

**वर्णः**-इ. १-३. श्वेतरक्तादिवर्णः; वर्णशब्देन च वर्णसहचरिताश्चक्षुर्ग्राह्या रौक्ष्यादयोऽपि गृह्यन्ते अत एव वर्णप्रस्ताव एव वक्ष्यति-यत् "वर्णग्रहणेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः" इति

**वर्णकः**-चि. ७-९२. वर्णकरमालेपनम्, रञ्जनचूर्णम् ।

**वर्णनाशः**-चि. ४-२७. रङ्गनाशः ।

**वर्ण्यः**-सू.४-१० | ८. वर्णाय हितः; अष्टमो महाकषायः ।

**वर्तः**-सू. २०-१२. वर्तुलीकरणम् ।

**वर्तिः**-सू. ५-२३. धूमवर्तिः ।

**वर्तिः**-सू. ७-९; वि. २-१३. फलवर्तिः—पिष्टैर्मदनफलादिभिर्यवाकाराऽङ्गुष्ठमात्रा शलाकाकारेण वर्तिता औषधपिष्टिः ।

**वर्तिका**:-चि. २-२-१२. वर्त्याकाराः भक्ष्याः ।

**वर्तिक्रिया**-क १-१. वर्तिक्रियायां चतुर्गुणेन क्वाथेन पाकाद्वर्त्याकारता कर्तव्या ।

**वर्त्म**-इ. ८-५. नयनगोलकावरकं निमेषोन्मेषाश्रयं पटलद्वयं वर्त्म उच्यते ।

**वली**-सि. ३-२५. गुदवली, त्वक्सङ्कोचजन्यो निम्नोन्नतरूपो भङ्गीविशेषः ।

**वशी**-शा. १-७. स्वेच्छाधीनप्रवृत्तिः ।

**वश्या**-चि. २-१ | ८. आयत्ता ।

**वसा**-सू. १-६८. मांसप्रभवधातुविशेषः (च.क.) शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता ॥ (सु. शा. ४)

**वाक्यशः**-सू. ३०-१७. तन्त्रमार्षं कात्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तम् ।

**वाक्यशेषः**-सि. १२-४२. यल्लाघवार्थमाचार्येण वाक्येषु पदमकृतं गम्यमानतया पूर्यते ।

**वाक्यार्थशः**-सू. ३०-१८. बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्यासमासप्रतिज्ञाहेतूदाहरणोपनयनिगमनयुक्ताभिस्त्रिविधशिष्यबुद्धिगम्याभिरुच्यमानं वाक्यार्थशो भवत्युक्तम् ।

**वाजीकरणम्**-सू. ३०-२८; चि.२-४/५१. वाजीकरणमिति अवाजिनं वाजिनं कुर्वन्त्यनेनेति वाजीकरणं, येन वाजयर्थं व्यज्यते स्त्रीषु शुक्रं तद्वाजीकरणम् । अन्ये तु वाजो वेगः प्रस्तावाच्छुक्रस्य, स विद्यते येषां ते वाजिनः ते क्रियन्तेऽनेनेति वाजीकरणमित्याहुः । किंवा वाजः शुक्रं सोऽस्यास्तीति वाजी अवाजी वाजी क्रियते येन तद्वाजीकरणम् । किंवा वाजो मैथुनम् उक्तं हि हारीते "वाजो नाम प्रकाशत्वात्तच्च मैथुनसंज्ञितम् । वाजीकरणसंज्ञाभिः पुरुषमेव प्रचक्षते"—इति शिवदासोक्तिः । यस्माद् द्रव्याद् भवेत्स्त्रीषु हर्षो वाजीकरं हि तत् । यथाश्वगन्धा मुशली शर्करा च शतावरी ॥ (व. द.) येन नारीषु सामर्थ्यं वाजिवल्लभते नरः व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् ॥

**वाट्य**-चि. ५-९८. क्षुण्णशुष्कयवौदनः ।

**वातः**-सू. १-८८. वाति गच्छति इति वातः, सदागतिः समीरणः ।

**वातकण्टकः**-सू. १४-१३. गुल्फाश्रितो वातः; रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते तदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ (अ. हृ. नि. १५-५३)

**वातबलासः**-च. २९-११. वातस्यावरणेन बलमस्त्यस्मिन् शोणिते इति वातबलासः ।

**वातप्रकृतिः**-वि. ६-१३. वातप्रधाना प्रकृतिः स्वभावः यस्य सः इति वातप्रकृतिः ।

**वातयन्त्रम्**-चि. २४-१५८. वायुसंचारार्थं यन्त्रम् ।

**वातलः**-सि. ५-६. वातदुष्टः ।

**वातविकाराः**-सि. ४-७. वातजनिता रोगविशेषाः ।

**वातवेगः**-सि. ३-२५. वायुवेगः ।

**वातिकषण्डः**–शा. २–१७. वाय्वग्निदोषाद् वृषणौ तु यस्य नाशं गतौ स वातिकषण्डः।

**वादः**–सू. २५–२७; वि. ८–२८. तत्र वादो नाम स यत् परेण सह शास्त्रपूर्वकं विगृह्य कथयति।

**वानस्पत्यः**–सू. १–७१ "पुष्पैर्वानस्पत्यः फलैरपि" इति पुष्पानन्तरं फलभाज इत्यर्थः। (चक्रः)

**वायुः**–सू. १–५७. वातः।

**वारुणीमण्डः**–चि. ५–९२. सुरामण्डः। (श. क.)

**वारुण्याः प्रसादः**–चि.८–६९. सुराप्रसादः। (श. क.)

**वार्तलक्षणम्**–सू. २५–४०. आरोग्यलक्षणम्।

**वार्ता**–शा. ४–३०. स्त्र्याकृतिभूयिष्ठा असौ इति स्त्रीषण्डविशेषः; असंपूर्णस्त्रीलक्षणां वार्ता नामेति वार्तासंज्ञा शास्त्रसमयकृता। (चक्रः)

**विकल्पः**–वि. १–३. समवेतानां पुनर्दोषाणामंशांशबलविकल्पः।

**विकल्पनम्**–सि. १२–४४. पाक्षिकाभिधानं यथा- "सारोदकं वाऽथ कुशोदकं वा" (चि. अ. ६) इत्यादि।

**विकल्पना**–सि. ११–२३. विशेषकल्पना।

**विकारः**–सू. ९–४. धातुवैषम्यम्।

**विकासि**–चि. २३–२४. हिंसनशीलं, विपूर्वो हि कसति हिंसार्थः। विकाशी विकसन्नेवं धातुबन्धान् विमोक्षयेत्। (व.द.) सन्धिबन्धांस्तु शिथिलान् यत् करोति विकासि तत्। विश्लेषश्चौजश्च धातुभ्यो यथा क्रमुककोद्रवौ॥ (व. द.)

**विकृतिः**–इ. १–३. विकारः

**विक्षेपः**–सि. १–३९. वियोगः।

**विगन्धः**–सि. ३–११. विगतः पूतिगन्धो यस्य सः विगन्धः।

**विगीतिः**–चि. ६–४. विरुद्धा गीतिः विगीतिः विरुद्धभाषणमित्यर्थः।

**विगुणः**–सि. ९–३९. गुणवैपरीत्यविशिष्टः। (श. क.)

**विगृह्यसंभाषा**–वि. ८–१८. जल्पवितण्डारूपा संभाषा

**विघातः**–सि. ११–१७. प्रकोपकहेतुनाऽसंबन्धः।

**विचर्चिका**–चि. ७–१३. क्षुद्रकुष्ठभेदः। तल्लक्षणम्- राज्योऽतिकण्ड्वर्तिरुजः सरूक्षा भवन्ति गात्रेषु विचर्चिकायाम्। (सु. नि. ५–१३)। (वै. श.)

**विचारः**–सू. २६–९. विचारणा, द्रव्यान्तरसंयोगः।

**विचारणा**–सू. १३–४. द्रव्यान्तरासंयुक्तस्नेहपानं वर्जयित्वा स्नेहोपयोगः।

**विज्जलम्**–वि. ८–१६. पिच्छलम्।

**विज्ञानानि**–इ. ९–२३. लक्षणानि, नयनादिवैकृतानि।

**विज्ञानम्**–शा. १–४०. शास्त्रार्थज्ञानम्।

**विज्ञानम्**–सू. २५–७३. विज्ञायते अनेन इति विज्ञानं लक्षणमित्यर्थः।

**विट्**–सि. ६–४५. पुरीषम्।

**विड्भेदः**–चि. ८–२६. पुरीषभेदः।

**वितण्डा**–वि. ८–२८. जल्पविपर्ययो वितण्डा। वितण्डा नाम परपक्षे दोषवचनमात्रमेव॥ परपक्षे दोषवचनमात्रमित्यनेन नस्वपक्षसाधनवचनं वैतण्डिकस्येति दर्शयति। (चक्रः)

**वित्रासनम्**–शा. ८–६४. भयदानम्।

**विद्रधिः**–सू. १७–९५. दुष्टरक्तातिमात्रत्वात्

स वै शीघ्रं विदह्यते। ततः शीघ्रविदाहित्वाद् विदग्धीत्यभिधीयते ॥

**विदाहः**–चि. २४–१४४. हृदये दाहः ।

**विदाहि**–सू. २७–२९३. विदाहि द्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम् । हृदि दाहञ्च जनयेत् पाकं गच्छति तच्चिरात् ॥ (व. द.)

**विधानम्**–सि. १२–४३. विधानं नाम सूत्रकारश्च विधाय वर्णयति; यथा—"मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः इत्यत्र दुष्टिशब्देन मलानां हीनत्वमधिकत्वमाचार्यगृहीतमाचार्यो वर्णयति— "मलवृद्धिं गुरुतया लाघवान्मलसंक्षयम् । मलायनानां बुध्येत संगोत्सर्गादतीव च" (सू. अ. ७) इति । (चक्रः)

**विधारणम्**–सि. ९–२९. वेगनिरोधः ।

**विनता**–सू. १७–८९. अवगाढरुजाक्लेदा पृष्ठे वाऽप्युदरेऽपि वा । महती विनता नीला पिडका विनता मता ॥

**विनिमित्तानि**–इ. ४–१७. विगतनिमित्तानि ।

**विनिर्मथ्य**–सि. ६–७८. क्षोभयित्वा ।

**विपत्**–सू. २५–२९. वैगुण्यम् ।

**विपर्ययः**–सि. १२–४३. अपकृष्टात् प्रतीपोदाहरणम् ।

**विपाकः**–सू. २६–६६. विपाकः कर्मनिष्ठया । कर्मनिष्ठयेति कर्मणो निष्ठा निष्पत्तिः कर्मनिष्ठा क्रियासमाप्तिः, रसोपयोगे सति योऽन्त्याहारपरिणामकृतः कर्मविशेषः कफशुक्रवृद्ध्यादिलक्षणः, तेन विपाको निश्चीयते। विपाकस्तु नित्यपरोक्षः, तत्कार्येणानुमीयते (चक्रः)। जाठरेणाग्निना योगाद् यद् यदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः । (व. द.)

**विपाटनम्**–चि. १३–२५. दारणम् ।

**विपादिका**–चि. ७–२९. कुष्ठभेदः

**विप्लुतः**–सि. ८–३. व्यापन्नः

**विबद्धः**–चि. २४–६३. विबन्धवान् ।

**विबद्धः दोषः**–चि. ३–१०९. अत्र दोषशब्दो विबद्धोपपदान्मले वर्तते । (चक्रः)

**विबन्धः**–चि. ४–४९. आनाहरोगः

**विभ्रंशः**–सू. १५–१३. प्रातिलोम्येन गमनम् ।

**विभ्रंशः**–सि. ६–३९. विपरीतप्रवृत्तिसामर्थ्यम् ।

**विमलम्**–सू. २७–११८. निर्मलम् ।

**विमूर्छिताः**–सि. ९–७१. स्थिताः ।

**वियोगः**–सू. ११–१२. भूतानामात्मनो वियोगः, मरणम् ।

**वियोनिः**–इ. २–१६. निर्हेतुकः ।

**विरजनीयः**–सू. २५–४०. विरजनं दोषसम्बन्धनिरासं करोति इति सः ।

**विरसः**–इ. २–२१. अनिष्टरसः ।

**विरुद्धाशनम्**–वि. २–८ विपरीत आहारः ।

**विरुद्धयोनयः**–इ. ६–२२. परस्परविरुद्धधर्माणः ।

**विरूक्षणम्**–चि. ५–१८. रूक्षीकरणम्

**विरूक्षस्वेदः**–सि. ७-१६. स्नेहरहितः स्वेदः ।

**विरेकः**–सू. ७–१५. मलभेदः । (श. क.)

**विरेचनम्**–सू. १–८०. विरेकः ।

**विरेचनोपगानि**–सू. ४–१३ | २४ इमानि द्रव्याणि विरेचनक्रियायां सहायत्वेनोपगच्छन्ति ।

**विलङ्घितः**–सि. ६–५७. कृतलङ्घनः ।

**विलयेत्**–चि. १२–८२. विम्लापनं कुर्यात् । विम्लापनम् अङ्गुल्यादिमर्दनेन शोफविलयनम् । (सु. चि. अ. १–२२. डल्हणः)

**विलेपनम्**–च. ६–५० गात्रानुलेपनम् ।

**विलेपिका**–सू. २७–२५१ विरलद्रवा यवागूः ।

**विलेपी**–नि. ४–५ यवागूः ।

**विवर्णम्**–इ. ४–१७ विरुद्धवर्णम्

**विवृता**–इ. ८–११, निर्गता ।

**विशदः**–सू. २६–११ पिच्छिलविपरीतः । विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः । (व. द.)

**विशिरा**–इ ७–५ शिरोविरहिता ।

**विशुद्धं शोणितम्** सू. २४–२२, २४ तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम् । गुञ्जाफलसवर्णञ्च विशुद्धं विद्धि शोणितम् ॥

**विशेषः**–सू. १–२८–४४, ४५ विशिष्यते व्यावर्तत इति विशेषः पृथक्त्वकृत् ।

**विशोधनम्**–सू. २७–१३१ विशुद्धिकारकम् ।

**विश्लेषः**–इ. १२–५१. पृथग्भावः अयोगः (श. क.)

**विषम्**–चि. २३–३ गरलम् (श. क.)

**विषगरवैरोधिकप्रशमनम्**–सू. ३०–२८. विषं गरलम्, गरः कालान्तरप्रकोपि विषम्, वैरोधिकं संयोगविरुद्धम्, तेषां प्रशमनमगदतन्त्रम् ।

**विषण्णम्**–चि. २३–५ खिन्नम्

**विषघ्नः**–सू. ४–८. विषनाशकः षोडशः कषायवर्गः ।

**विषमक्रियत्वम्**–चि. ६–७ विषमक्रियत्वमिति पित्तस्य संशमनचिकित्सायाः कट्वादिरूपाया विषमत्वम् ।

**विषमज्वरः**–चि. ३–७३. दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ (मा. नि.)

**विषमाग्निः**–वि. ६–१२, चि. १३–१३६. समलक्षणविपरीतलक्षणस्तुविषम इति ॥

**विषमाशनम्**–चि. १५–४२, २३६. विषमं बहु वाऽल्पं वाऽप्यप्राप्तातीतकालयोः भोजनम्; बहुस्तोकमकाले वा तज्ज्ञेय विषमाशनम् ॥ (सु. सू. ४६–५०८.)

**विषमाहारः**–वि. ६–१३ विषमाशनम् ।

**विषादः**–सू. २५–४०. खेदः ।

**विषाधानम्**–चि. १३–४२. विषस्य प्रसारकम् ।

**विष्किराः**–चि. १२–१८ । ४ विकीर्य भक्षयन्ति इति ।

**विष्टम्भः**–चि. १४–२१ अप्रचलत्वम् ।

**विष्यन्दनम्**–सू. २८–३३ विलयनम् ।

**विसर्गः**–चि. ३–५९. परित्यागः ।

**विसर्गः**–सू. ६.–४. विसृजति जनयति आप्यमंशं प्राणिनां च बलमिति विसर्गः ।

**विसर्पः**–वि २१–११. विविधं सर्पतीति अध उर्ध्वं तिर्यक् तथास्फटशोफादिभिः प्रसरतीति विसर्पः ।

**विसर्पिणी जिह्वा**–इ. ८–१४. वहिर्निर्गता जिह्वा ।

**विसूचिका**–वि. २–११. विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः । सूचीभिरिव गात्राणि विध्यन्तीति विसूचिका ॥ (अ. सं. सू. ११)

**विस्फोटकम्**–चि. ७–१६. विस्फोटकं नाम कुष्ठं तनुत्वग्भिः श्वेतलोहितैः स्फोटैर्व्याप्तम् ।

**विस्मापनम्**–चि. १७–१३७. विस्मयजनकम् ।

**विस्रगन्धि**–चि. १४–१४. पूतिगन्धम्, आमगन्धम् ।

**विस्रत्वम्**–सि. ५–७. आमगन्धता ।

**विहारः**–शा. २–२९. गमनभ्रमणादिशारीरचेष्टा ।

**वीतीभावः**–इ. ३–४. अतिक्षीणत्वम् ।

**वीर्यम्**–सू. २६–६४. मृदुतीक्ष्णगुरुलघुस्निग्धरूक्षोष्ण-शीतलम् । वीर्यमष्टविधं केचित्, केचिद् द्विविधमास्थिताः ॥ शीतोष्णमिति, एतच्चकीयमतद्वयं पारिभाषिकीं वीर्यसंज्ञां पुरस्कृत्य प्रवृत्तम् । वैद्यके हि रसविपाकप्रभावव्यतिरिक्ते प्रभूतकार्यकारिणि गुणे वीर्यमिति संज्ञा, तेनाष्टविधवीर्यवादिमते पिच्छिलविशदादयो गुणा न रसादिविपरीतं कार्यं प्रायः कुर्वन्ति, तेन तेषां रसाद्युद्देशेनैव ग्रहणं; मृद्वादीनां तु रसाद्यभिभावकत्वमस्ति, यथा—पिप्पल्यां कटुरसकार्यं पित्तकोपनमभिभूय तद्गते मृदु शीतवीर्ये पित्तमेव शमयत इति, तथा कषाये तिक्तानुरसे महति पञ्चमूले तत्कार्यं वातकोपनमभिभूयोष्णेन वीर्येण तद्विरुद्धं वातशमनमेव क्रियते, तथा मधुरेऽपीक्षौ शीतवीर्यत्वेन वातवृद्धिरित्यादि यदुक्तं सुश्रुते–"एतानि खलु वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म दर्शयन्ति" (सु. सू. अ ४०) इत्यादि । एतच्च मतद्वयमप्याचार्यस्य परिभाषासिद्धमनुमतमेव, येनोत्तरत्र "रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते" इत्यादौ पारिभाषिकमेव वीर्यं निर्देक्ष्यति । (चक्रः)

**वीर्यम्**–सू. २६–६५. वीर्यं तु क्रियते येन या क्रिया । नावीर्यं कुरुते किञ्चित् सर्वा वीर्यकृता क्रिया ॥ पारिभाषिकवीर्यसंज्ञापरित्यागेन तु शक्तिपर्यायस्य वीर्यस्य लक्षणमाह–वीर्यमित्यादि । वीर्यमिति शक्तिः । येनेति रसेन वा विपाकेन वा प्रभावेण वा गुर्वादिपरादिभिर्वा गुणैर्या क्रिया तर्पणह्लादनशमनादिरूपा क्रियते, तस्यां क्रियायां तद्रसादि वीर्यम् । अत एवोक्तं सुश्रुते–"येन कुर्वन्ति तद्वीर्यम्" (सु. सू. अ. ४०.) इति अत्रैव लोकप्रसिद्धामुपपत्तिमाह–नावीर्यमित्यादि । अवीर्यम् अशक्तमित्यर्थः । वीर्यकृतेति वीर्यवता कृता वीर्यकृता । (चक्रः)

**वीर्यम्**–सू. २६–६६. वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ अधीवासः सहावस्थानं, यावदधीवासादितियावच्छरीरनिवासात् । निपाताच्चेति शरीरसंयोगमात्रात्; तेन किञ्चिद्वीर्यमधीवासादुपलभ्यते, यथा–अनूपमांसादेरुष्णत्वं, किञ्चिच्च निपातादेव लभ्यते, यथा मरीचादीनां तीक्ष्णत्वादि; किञ्चिच्च निपाताधीवासाभ्यां, यथा मरीचादीनामेव । वीर्यं तु किञ्चिदनुमानेन, यथा सैन्धवगतं शैत्यमानूपमांसगतं वा औष्ण्यं, किञ्चिच्च वीर्यं प्रत्यक्षेणैव यथा राजिकागतं तैक्ष्ण्यं घ्राणेन, पिच्छिलविशदस्निग्धरूक्षादयः चक्षुःस्पर्शनाभ्यां निश्चीयन्ते इति वाक्यार्थः । एतच्च वीर्यं सहजं कृत्रिमं च ज्ञेयम् । एतच्च वीर्यलक्षणं पारिभाषिकवीर्यविषयमेव (चक्रः) । एतच्च वीर्यं सहजं कृत्रिमं च ज्ञेयं; तत्राद्यं माषाणां गौरवं मुद्गानां लाघवमित्यादि, कृत्रिमं तु लाजादीनां लघुत्वमित्यर्थः" इति शिवदाससेनः ।

**वीरुधः**–सू. ९–७१. प्रतानैर्वीरुधः स्मृताः ।

**वृक्कौ**–शा. ७–१०. भाषायां 'गुर्दे' इति, आङ्ग्लभाषायां च 'किड्निज्' इति ख्यातौ ।

**वृत्तः**–वि. २१–३९. वर्तुलः ।

**वृत्तिः**–सि. ७–४२. पेयादिक्रमः ।

**वृषः**–चि. २/४–७. वीर्यपुंस्त्वशक्तिसम्पन्नः ।

**वृषणौ**–वि. ५–८ अण्डकोषौ ।

**वृषता**–चि. २/४–२४ वीर्यपुंस्त्वशक्तिसंपन्नत्वम् ।

**वृष्यम्**–चि. ३०–६७ वाजीकरम् (ग. क.)

**व्रणः**–चि. २५–४ वृणोति यस्माद् रूढेऽपि व्रणवस्तु न नश्यति । आदेहधारणात्तस्माद् व्रणइत्युच्यते बुधैः (सु. सू. अ. २१)

**वेगधारणम्**–सू. ११–३८ वेगनिरोधः ।

**वेगनिग्रहः**–सि. ६–७१ वेगविधारणम् ।

**वेगप्रतिघातः**–चि. ८–२१ वेगसंधारणम् ।

**वेगोदीरणम्** सू. ११–३८ अप्राप्तवेगप्रवर्तनम् ।

**वेणिका**–चि. २३–३८. रज्जुः ।

**वेदः**–सू. ३०–२०. आयुर्वेदः ।

**वेदनास्थापनः** सू. ४–१८ | ४७ सप्तचत्वारिंशत्तमो महाकषायः । वेदनायां सम्भूतायां तां निहृत्य शरीरं प्रकृतौ स्थापयति इति (व. द.

**वेपनम्**–सि. ३–१९. वेपथुः ।

**वेशवारः**–सू. २७–२६९ मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम् । पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम् ॥ ऐकध्यं विपचेत्सम्यग्वेशवार इति स्मृतः ॥

**वेष्टनम्**–सि. ४–२८ पार्श्ववेष्टनम् ।

**वैकृतम्**–चि. ३–२९. अन्यथात्वम् ।

**वैगन्ध्यम्**–सू. १९–४ | १ विकृतगन्धता, अनिष्टगन्धता च ।

**वैगुण्यम्**–सि. ६–३०. गुणानां न्यूनता ।

**वैधवृत्तिः**–सू. ९–२६. मैत्रीकारुण्यमार्तेषु शक्ये प्रीतिरुपेक्षणम् । प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधा ॥

**वैपादिकम् (विपादिका)**– चि. ७–२२. चतुर्थं क्षुद्रकुष्ठम्, वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥

**वैरस्यम्**–सू. १९– | १ विरसता।

**वैरेचनिकाः धूमाः**–चि. ७–४९. शीर्षविरेचनार्था धूमाः । सूत्रस्थाने यद्यपि एक एव वैरेचनिको धूम उक्तस्तथापि तत्रोक्तद्रव्यैर्व्यस्तसमस्तैर्बहवो धूमा भवन्तीति बहुवचनमिह कृतम् । (चक्रः)

**वंशः**–सू. १४–३१ वेणुः ।

**व्यक्तिदर्शकः**–चि. २४–७३. आकारदर्शकः ।

**व्यञ्जनम्**–नि. १–९. तत्र लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम् ।

**व्यत्यासः**–चि. १७–१३४ विपर्यासः ।

**व्यथनम्**–नि. ८–६ व्यथा ।

**व्यधः**–सू. २०–४ व्यधनम् ।

**व्यधनम्** सू. ११–५५ व्यधः ।

**व्यपदेशः** सू. ११–५२ अन्यसम्बन्धेन कीर्तनम् ।

**व्यपायः**–पि. २६–३९ मूत्रमार्गापगमः ।

**व्यवसायः**–चि. ४–८ प्रवृत्तिः ।

**व्यवायः**–सू. ६–३६. मैथुनम् ।

**व्यवायि**–चि. २३–२६. क. १–५. शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं देहम्; व्यवायित्वं सर्वतः प्रसरणशीलत्वं पानीयपतिततैलवत्; पूर्वं व्याप्याखिलं कायं ततः पाकं च गच्छति । व्यवायि तद् यथा भङ्गा फेनं चाहिसमुद्भवम् ॥ (व. द.)

**व्यसनम्**–इ. १२–२७. वस्त्रादीनां यत् स्फुटनादि ।

**व्यसनी**–इ. १२–२७. व्यङ्गः कलहवान् वा ।

**व्यस्तानि**–इ. ३–५. पृथग्भूतानि ।

**व्याकृतीनि**–इ. ४–१७. विविधाकृतीनि ।

**व्याख्यानम्**–सि. १२–४३. यत्सर्वबुद्धयविषयं व्याक्रियते, यथा "प्रथमे मासि संमूर्छितः सर्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः" (शा. आ. ४.) इत्यादिनाऽस्मदाद्यविदितार्थव्याकरणम् (चक्रः)

**व्याधिः**–नि. १–५. विविधं दुःखमादधातीति ।

**व्यानः**–चि. १५–३६. शरीरस्थपञ्चवाय्वन्तर्गतसर्वशरीरगवायुः (श. क.)

**व्यापत्**–सू. २५–४०. रोगः ।

**व्यायामः**–शा. ८–४५. विस्तारः ।

**व्याविद्धः**–सि. ९–३९. वक्री ।

**व्यासः**–सू. २०–१२. विस्तरणम् ।

**शकृद्ग्रहः**–सि. ७–८. पुरीषाप्रवृत्तिः ।

**शक्तुः**–चि. २१–१३०. भर्जितयवादिचूर्णम् (श. क.)

**शतारुः**–चि. ७–१३. दशमं क्षुद्रकुष्ठम् ; रक्तं श्यावं सदाहार्ति शतारुः स्याद् बहुव्रणम् । (श. क.)

**शब्दः**–इ. १२–५८. नादः

**शब्दश्रवौ**–इ. ८–१२. कर्णौ ।

**शमः**–शि. १–५. शान्तिः ।

**शमनम्**–चि. ३–२७२. कषायसर्पिःपानादि; न शोधयति यद् दोषान् समान्नोदीरयत्यपि । समीकरोति संवृद्धान् शमनं तद् यथामृता ॥ (व. द.)

**शमीधान्यम्**–सू. २७–६. माषादि । (श. क.)

**शराविका**–सू. १७–८४. अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुगन्विता । शराविका स्यात् पिडका शरावाकृतिसंस्थिता ॥

**शरीरान्ताः**–इ. ९. ६. हस्तपादादयः ।

**शर्करा**–इ. ३–६. मलो दन्तगतो यस्तु पित्तमारुतशोषितः । शर्करेव खरस्पर्शो सा ज्ञेया दन्तशर्करा ॥ (मा. नि.)

**शर्म**–सू. १–२९. सुखम्

**शल्यम्**–चि. २५–१०६. न केवलं काष्ठतृणादि शल्यं, किन्तु "अतिप्रवृद्धं मलदोषजं वा शरीरिणां स्थावरजङ्गमानाम् । यत्किंचिदाबाधकरं शरीरे तत् सर्वमेव प्रवदन्ति शल्यम् " इति । (सु. सू. १–८/९. डल्हणः)

**शल्यापहर्तृकम्**–सू. ३०–२८. शल्योद्धरणकर्तृकम् ।

**शष्कुली**–क. १–२९. पिष्टकविशेषः । (वै. श.)

**शस्त्रकर्म**–सू. १–९१. शस्त्रनिर्वर्त्यं कर्म छेदनादि (वै. श.)

**शस्त्रप्रणिधानम्**–सू. ११–५५. शस्त्रावचारणम्—छेदनभेदनव्यधनदारणलेखनोत्पाटनप्रच्छनसीवनैषणक्षारजलौकसश्चेति ।

**शस्त्रम्**-चि. २६–२७२. कृष्णं लोहम् । (चक्रः)

**शस्यानि**–चि. १–१ | ३७. अस्थिरहितानि फलानि । (चक्रः)

**शाखा**-सू. ३०–३१. तत्रायुर्वेदः शाखा विद्या सूत्रं ज्ञानं लक्षणं तन्त्रमित्यनर्थान्तरम् ।

**शाखा**-सि. ९–३. शाखाशब्देन चेह शाखा इव शाखेति कृत्वा बाहुद्वयं जङ्घाद्वयं चोच्यते । नेह शाखाशब्देन रक्तादिधातूनां ग्रहणं, रक्तादिधातूनां स्कन्धेऽपि विद्यमानत्वात् । (चक्रः)

**शाखा**–सू. ११–४८; १७–११३. रक्तादयो धातवस्त्वक् च, स बाह्यो रोगमार्गः ।

**शाणः**–क. १२–८९. त्रयो माषकाः । (चक्रः)

**शान्ताग्निम्**- चि. ७–३७. नष्टाग्निम् ।

**शारीरः**–चि. ७–३६. शरीरजातः ।

**शार्करः**–सू. २७–१८३. शर्कराप्रकृतिक आसवः । (चक्रः)

**शालाक्यम्**- सू. ३०–२८. पटलवेधशलाकाप्रधानमङ्गं शालाक्यम् । (चक्रः); शालाक्यं नामोर्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् । (सु. १–८ | २); शलाका पटलवेधनी, तस्याः कर्म शालाक्यं; ब्राह्मणादित्वात् ष्यञ्, शालाक्यप्रधानमङ्गं शालाक्यम् । एतेन शिरोरोगप्रतीकारस्यापि ग्रहणं, प्राधान्यं च शालाक्यस्य प्रधानचक्षुर्विषयतया । (शिवदाससेनः)

**शालाक्यतन्त्रम्**–चि. २६–१२३. शलाकाविषयमधिकृत्य कृतं शास्त्रम् ।

**शास्त्रम्**–सू. ३०–३१. आयुर्वेदः ।

**शास्त्रवादः**–सू. ११–२७. शास्त्ररूपो वादः ।

**शिरः**–सू. १७–१२. प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च । यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ॥

**शिरःशूलम्**–चि. ८–१६. शिरोरोगः (वै. श.)

**शिरोधरा**–सू. १७–२१. ग्रीवा ।

**शिरोबस्तिः**–सि. ९–७८. आशिरोव्यायतं चर्म कृत्वाऽष्टाङ्गुलमुच्छ्रितम् । तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥ निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत् । धारयेदारुजः शान्त्यै यामं यामार्धमेव वा ॥ शिरोबस्तिर्जयत्येष शिरोरोगं मरुद्भवम् । (चक्रः)। शिरोबस्तिश्चर्मणः स्याद्द्विमुखो द्वादशाङ्गुलः । शिरःप्रमाणस्तं बद्ध्वा मस्तके माषपिष्टकैः । सन्धिरोधं विधायाशु स्नेहैः कोष्णैः प्रपूरयेत् । तावद् धार्यस्तु यावत् स्यात् नासाकर्णमुखस्रुतिः ॥ (व. द.)

**शिरोरुक्**–चि. ८–२५. शिरोरुजा ।

**शिरोरुहाः**– इ. ८–१८ केशाः ।

**शिरोविरेकः**–सि. ९–७३. शिरोविरेचनम् , नस्यभेदः ।

**शिरोविरेचनम्**–सि. ९–७७. शिरोविरेकः ।

**शिरोविरेचनोपगः**–सू. ४–८. शिरोविरेचनक्रियायां सहायत्वेनोपगच्छतीति; सप्तविंशतितमो महाकषायः ।

**शिशिरज्वरः**–चि. ३–२७०. शीतज्वरः । (च.क.)

**शीघ्रकारित्वम्**– चि. ३–५५. शीघ्रं करोति इति शीघ्रकारी तस्य भावः शीघ्रकारित्वम् ; स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ।

**शीतः**–सू. ४–७. द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः समुदाहृतः ॥

**शीतकषायः**–चि, ३–१९७. द्रव्यं संक्षुण्णमुष्णोदके प्रक्षिप्य निशास्थितम् । शीतः शर्वरीमुषितो मतः । (व. द.)

**शीतज्वरः**– चि. ३–२६७. शिशिरज्वरः

**शीतप्रशमनः**–सू. ४–८. शीतं प्रशमयति इति; द्विचत्वारिंशत्तमो महाकषायः ।

**शीतरसः**–चि. ७–४४. शीतकषायः ।

**शीतरसिकः**–सू. २७–१८५. शीतेक्षुरसकृतः अरिष्टः ।

**शीतलम्**–सू. २७–११०. शीतम् ।

**शीताङ्गः**–चि. ३–३२५. शीतसर्वाङ्गः ।

**शीधुः**–चि. ८–१४० शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ॥ (व. द.)

**शीलम्**–चि. ४–८. वस्तुषु सहजो रागः ।

**शीर्षविरेचनम्**–सि. ९–१७. शिरोविरेचनम् ।

**शुक्तम्**–चि. २९–६. यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रनागरम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ (च. चि. २६–२२७ चक्रः) गुडमाक्षिकधान्याम्लमस्त्वम्बु-द्विगुणं क्रमात् । शंसन्ति चुक्रसिद्ध्यर्थं किंचित् त्रिमधुकान्वितम् ॥ (वै. श.)

**शुक्तिः**–क. १२–१६. द्वे सुवर्णे पलार्धं स्याच्छुक्तिरष्टमिका तथा ।

**शुक्रम्**–चि. १५–१६. रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रसादजः ॥

**शुक्रम्**–चि. ३०–१३३. बीजं यस्माद् व्यवाये तु हर्षयोनिसमुत्थितम् । शुक्रं पौरुषमित्युक्तं, तत् स्त्रीपुरुषसंयोगे चेष्टासंकल्पपीडनात् शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात्पटादिव । (चि. २–४/४७.) चरतो विश्वरूपस्य रूपद्रव्यं यदुच्यते (चि. २–८/८९.)

**शुक्रजननः** सू. ४–८. शुक्रोत्पादक एकोनविंशो महाकषायः ।

**शुक्रदोषः**–चि. ३०–१२९. वीर्यदोषः ।

**शुक्रलः**—सू. २७ ६५. शुक्रवृद्धिकरः; यस्माच्छुक्रस्य वृद्धिः स्याच्छुक्रलं हि तदुच्यते। यथा नागबलाद्याः स्युर्बीजं च कपिकच्छुजम् ॥ (व. द.)

**शुक्रवाहिनी नाडी** सि. ९–४ शुक्रवहस्रोतः ।

**शुक्रवाहीनि स्रोतांसि**—वि. ५–९९. शुक्रप्रापण्यो नाड्यः ।

**शुक्रशोधनः**—सू–४–८ शुक्रं शोधयति विमलीकरोति यः सः विंशो महाकषायः ।

**शुक्रसारः**—वि. ८–१०९, शुक्रं वीर्यापरनामकः सप्तमो धातुः सारः उत्कृष्टः विशुद्धतरो यस्मिन्सः ।

**शुक्राशयः**—चि. २१–७२. वीर्याशयः ।

**शुद्धिः**—सू. २८–२८. शोधनम् ।

**शुद्धसत्त्वम्**—शा.–४–३६. सत्त्वगुणप्रधानं चित्तम् ।

**शुष्कम्**—सू. ५–१०. नीरसम् ।

**शुषिरकरम्**—सू. १२–७ रन्ध्रकरम् ।

**शूकधान्यम्**—सू. २७–६. श्लक्ष्णतीक्ष्णाग्रसहितं धान्यम् ।

**शून्यता**—सू. १७–३९. चित्तस्यानुपस्थितत्वम् ।

**शूर्पः**—क. १२–९६. द्रोणस्तु द्विगुणः शूर्पो विज्ञेयः कुम्भ एव च।

**शूलम्**—चि. २१–३० शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः। शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते ॥ (सु. उ. ४२–८१.)

**शूलप्रशमनः**—सू. ४–८. शूलं प्रशमयतीति, पञ्चचत्वारिंशत्तमो महाकषायः

**शूल्यानि**—वि. ६–४७. शूलपक्वानि।

**शृतः**—सू. ४–७. वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः ।

**शृतशीतम्**—चि. ३–१४६ पूर्वं शृतं पश्चात् शीतम्।

**शोकः**—सू. २५–४०. बन्ध्वादिवियोगजन्यमनोवेदना।

**शोणितम्**—इ. ३–४. रक्तम् ।

**शोणितमोक्षः**—चि. ७–१७२. रक्तमोक्षः। (श. क.)

**शोणितवाहीनि स्रोतांसि**—वि. ५–८. शोणितं वहन्ति नयन्ति ये ते मार्गाः

**शोणितस्थापनः**—सू. ४–८ शोणितस्य दुष्टस्य दुष्टिम् अपहृत्य प्रकृतौ शोणितं स्थापयति इति (चक्रः)। षट्चत्वारिंशत्तमो महाकषायः ।

**शोथहरः**—सू. ४–८. शोथं हरति इति, अष्टत्रिंशो महाकषायः ।

**शोफः**—सू. १७–२९. शोथः ।

**शोषः**—चि. ८–१६३. शरीरशोषको रोगविशेषः, राजयक्ष्मा ।

**शोषणः**—सू. २५–४०. शोषयतीति ।

**शौचाधानम्**—सू. ५–९८. पानीयेन मृदा च शुचित्वापादनम् ।

**श्मश्रु**—सू. २८–४. पुंमुखे दीर्घलोमराजिः ।

**श्रमहरः**—सू. ४–८. परिश्रमं हरति यः सः, चत्वारिंशत्तमो महाकषायः ।

**श्रोत्रम्**—इ. १–३. श्रवणेन्द्रियम् ।

**श्लक्ष्णः**—सू. २६–११. खरविपरीतः ।

**श्लेष्मप्रकृतिः**—वि. ६–१३. श्लेष्मलः, श्लेष्मा कफः प्रकृतिः स्वभावतः प्रबलो यस्मिन्सः ।

**श्लेष्मा**—सू. १२–१२. कफः

**श्लोकस्थानम्**–वि. ८–२९. सूत्रस्थानम्, श्लोकार्थः संग्रहार्थश्च श्लोकस्थानमतः स्मृतम्।

**श्वयथुः**–चि. १०–२३. शोथः।

**श्वसनम्**–सि. ९–१६. श्वासः।

**श्वासः**–वि. ८–२६. प्राणवायोर्नासिकागलमार्गेण निर्गमप्रवेशौ श्वासः, तदवरोधोपलक्षितो रोगविशेषोऽपि श्वासः।

**श्वासहरः**–सू. ४–८. श्वासघ्नः।

**श्वित्रम्**–च. ७–१६२. श्वेतकुष्ठम्। (श.क.)

**षडङ्गम्**–सू. ३०–४. षडङ्गानि बाहुद्वयजङ्घाद्वय-शिरोऽन्तराधिरूपाणि यस्य तत्।

**षण्डः**–इ. १२–१६. नपुंसकः।

**ष्ठीवनम्**–चि. ३–१०६. मुखेन श्लेष्मादेर्वमनम्। (श. क.)

**सक्तुः**–सू. १३–२४. भृष्टयवादिचूर्णम्।

**सक्थि**–सि. ३–१८. ऊरुदेशः।

**सङ्करस्वेदः**–सू. १४–४१. तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं संकरस्वेद इति विद्यात्। (सू. १४–४१.); पिण्डैर्यथोक्तैरिति तिलमाषादिपिण्डैस्तथा गोखरादिग्रन्थोक्तपुटकरूपैश्च पिण्डैः, स्वेदनमेवोपस्वेदनम्। (चक्रः)

**सङ्कल्पः**–सू. २५–४०. स्त्रीसङ्गसङ्कल्पः।

**सङ्कीर्णभोजनम्**–सू. १७–२७. विरुद्धाहारः।

**सङ्गः**–सि. १–७. अप्रवृत्तिः।

**सततः**–चि. ३–३४. तत्र संतते ज्वरे बलवता दोषेण सप्ताहादिः प्रकृष्टत्वाद् बलवान् कालो नियम्यते, सततके तु संततकालापेक्षया हीनबलेन दोषेणाबलो ज्वरकालः, स ह्यहोरात्रे द्विकालेनात्र व्यापको भवति।

**सततकः**–चि. ३–६१. ६२. रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्॥ सप्रत्यनीकः कुरुते कालवृद्धिक्षयात्मकम्। अहोरात्रे सततको द्वौ कालावनुवर्तते॥ प्रायोग्रहणात् सततको रक्तव्यतिरिक्तं मांसादिधातुमप्याश्रयत इति दर्शयति। सप्रत्यनीक इति कालादिषु मध्येऽन्यतमः प्रत्यनीकः। कालवृद्धिक्षयात्मकमिति काल वृद्धिक्षयोचिते काले वृद्धिः क्षयश्च यस्य स कालवृद्धिक्षयात्मा। तेन, दोषानुगुणे काले ज्वरो भवति, दोषानुगुणकालव्यतिरिक्ते च काले क्षयो भवति। ज्वरस्य कालप्रकृतिदूष्याणां मध्येऽन्यतमाद्बलप्राप्तौ सत्यामपि दोषसंप्राप्तिमहिम्ना हि कालभाविस्वनियमो ज्ञेयः। (चक्रः)

**सत्त्वम्**–सू. ८–४. वि. ८–११०. अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञक, 'चेतः' इत्याहुरेके तदर्थात्मसंपदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम्॥ चेत इत्याहुरेक इत परमतस्याप्रतिषेधात्स्वयमप्यनुमतम्। पर्यायकथनं शास्त्रे व्यवहारार्थम्। तदिति मनः अर्थो मनोऽर्थः स च सुखादिश्चिन्त्यविचार्यादिश्च आत्मा चेतनप्रतिसन्धाता, अनयोः सम्पत् तदर्थात्मसंपत्, एतदायत्ता चेष्टा व्यापारः यस्य तत्तथा; तत्रार्थसंपत् सुखादीनां सन्निकर्षश्चिन्त्यादीनामाभिमुख्यं च आत्मसंपदर्थग्रहणे प्रयत्नशालित्वं, मनश्चेष्टा च सुखादिज्ञानं तथा चिन्त्यचिन्तनाद तथा चक्षुरादिप्रेरणं च। इन्द्रियाणां चक्षुरादीनां या चेष्टा स्वविषयरूपादिज्ञानलक्षणा, तत्र प्रत्ययभूतं कारणभूतं मन इति योज्यम्। एतेनैतदुक्तं भवति–यदा सुखादयश्चिन्त्यादयोऽपि विषया भवन्त्यात्मा च प्रयत्नवान् भवति तदा मनः स्वविषये प्रवर्तते, इन्द्रियाणि चाधितिष्ठति, इन्द्रियाणि च मनोऽधिष्ठितान्येव स्वविषयज्ञाने प्रवर्तन्ते। (चक्रः)

**सत्त्वसारः**–वि. ८–११०. सत्त्वं मनः, सारः विशुद्धतरो धातुः, उत्कृष्टं बलवद् वा यस्मिन्सः।

**सत्त्वावजयः**–सू. ११–५४. अहितेभ्योऽर्थेभ्यो मनोनिग्रहः।

**सत्त्वौदार्यम्**–स. २१–५६. सत्त्वगुणभूरित्वम्।

**सदनम्**–सू. १७–५३. अवसादः।

**सद्यःप्राणहराणि**–वि. ८–९४. शीघ्रघातीनि ।

**सन्धातृ**–सू.–२७–२४५. सन्धानीयम् ।

**सन्धानकरः**–सू. १२–८. सङ्घट्टनकरः (श. क.)

**सन्धानम्**–सू. १–१०८. घातविशेषात् द्विधाभूतस्य अवयवस्य ऐक्यभावः (व. द.)

**सन्धानीयः**–सू.–४–८. भग्नसंयोजनः (वै. श.), प्रथमो महाकषायः।

**सन्धायसंभाषा**–वि.८–१७. अनुलोमसंभाषारूपो वादः।

**सन्धारणम्**–सू. १७.–८. वेगसंधारणम्, वेगावरोधः।

**सन्धिः**–इ. ३–४. अस्थिसंयोगस्थानम् (वै. श.)

**सन्निपतिताः**–चि. ३–१२९. त्रयोऽपि मिलिताः ।

**सप्रत्यनीकः**–चि. ३–६२. कालादिषु मध्येऽन्यतमः प्रत्यनीकः तेन सहितः ।

**समक्रियत्वम्**–चि. ६–७. क्रियायाः दोषेण दूष्येण चाविरुद्धत्वम् ।

**समधातुः**–वि. ८–९५. समाः स्वप्रमाणस्थिताः क्षयवृद्धिरहिता धातवो यस्य सः ।

**सममांसचयः**–सू. २१–१९. समः नातिस्थूलकृशः मांसस्य चयः वृद्धिः यस्मिन्सः। क्षुत्पिपासातपसहः शीतव्यायामसंसहः। समपक्ता समजरः सममांसचयो मतः ॥

**समयः**–वि. ८–५४ सिद्धान्तः, समयः पुनस्त्रिधा भवति; यथा–आयुर्वैदिकसमयः–चतुष्पादं भेषजमिति, याज्ञिकसमयः–आलभ्या यजमानैः पशव इति, मोक्षशास्त्रिकसमयः–सर्वभूतेष्वहिंसेति ।

**समयोगः** सू. ११–४३. समः हीनातिमिथ्यात्वरहितः अर्थानां कर्मणः कालस्य च योगः मेलनं समयोगः ।

**समयोगवाहि**–शा. ६–४. समेन उचितप्रमाणेन धातूनां मेलकेन सम्यङ् नीरोगतया वहतीति समयोगवाहि ।

**समवायः**–सू. १–२९, ५०. समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः। स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥ (द्रव्यगुणसंग्रहः)

**समवायिकारणम्**–सू. १–५९. यत् स्वसमवेतं कार्यं जनयति ।

**समवायी**–सू. १–५१. समवायाश्रयः ।

**समशनम्**–चि. १५–२३५. पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम्; हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् । (सु. सू. ४६–५०८).

**समाग्निः**–वि.–६–१२. अपचारतो विकृतिमापद्यमानोऽनपचारतः प्रकृताववतिष्ठमानोऽग्निः ।

**समातीतम्**–सू. २७–३०९. एकवर्षातीतम् ।

**समानः**–वि. ६–४. उभयवाचकत्वेन तुल्यः ।

**समावृतः**–चि. २१–२९. सम्यक् प्रकारेण आवृतः

**समासः**–सू. ३०–१८. संक्षेपः

**समीरणः**–चि. ४–८ वायुः

**समुच्चयः**–सि. १२–४४. यदिदं चेदं चेतिकृत्वा विधीयते ।

**समुत्क्लिष्टाः** सि. २–९. प्रकुपिताः ।

**समुत्क्षिप्ता**–चि. २८–४१ अतित्वरिता ।

**समुदीरणम्**–चि–९–७ प्रेरणम् ।

**समृद्धः**–इ. ९–४ उपचितः ।

**सम्यग्योगः**–सि. ६–१० हीनातिमिथ्यायोगविपरीतं यथा स्यात्तथा प्रवर्तनम् ।

**सरः**–सू. २७–२३७. मलानामपानवायोश्च प्रवर्तकः, सरोऽनुलोमनः प्रोक्तः सरस्तेषां प्रवर्त्तकः । (व. द.)

**सरत्वम्**–चि. २/४–४८. अस्थैर्यम् ।

**सर्पिः**–चि. ५–१८३ घृतम्, दुग्धसम्भूतस्नेहः । (वै. श.)

**सर्पिर्मण्डः**–चि. २६–२३२. घृतस्योपरितनोऽच्छो भागः ।

**सर्वग्रहः** वि. १–२१ | ४. सर्वस्य आहारस्य प्रमाणग्रहणमेकपिण्डेन सर्वग्रहः ।

**सर्वक्षमः**–सि. १२–९. सर्वरसाभ्यासक्षमः ।

**सर्षपी**–सू. १७–८७. पिडका नातिमहती क्षिप्रपाका महारुजा । सर्षपी सर्षपाभाभिः पिडकाभिश्चिता भवेत् ॥

**सात्म्यम्**–वि. १–१९–२०. सात्म्यं नाम तद्यदात्मन्युपशेते सुखयति अपथ्यमपि सद्विकारं न जनयति । सात्म्यार्थो ह्युपशयार्थः; ओकसात्म्यम्–ओकादभ्यासात् सात्म्यम् । उपशेते यदौचित्यादोकसात्म्यं तदुच्यते ।

**सात्म्यम्**–वि. ८–१३० यद् यस्य सेवितं सुखाय सम्पद्यते तत्तस्य सात्म्यम् (वै. श.)

**सात्त्विकः**–चि. २४–५५ सत्त्वगुणप्रधानः ।

**साद्गुण्यम्**–वि. १–२४ | १ प्रशस्तगुणयोगिता ।

**साधनम्**–चि. १–१ | २. चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् । प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् । विद्याद् भेषजनामानि ।

**सानुबाधनम्**–चि १–१ |५. दीर्घकालावस्थायी कुष्ठादिविकारकारी अभेषजप्रकारः ।

**सामान्यम्**–सू. १–२८. सामान्यमेकत्वकरम् । तुल्यार्थता हि सामान्यम् ।

**सारः**–सू १–७३ वृक्षान्तर्गतकठिनकाष्ठम् ।

**सारः**–वि. ८–१०२. विशुद्धतरो धातुः ।

**साहसम्**–चि. ८–१९. सहसा शक्तिमनालोच्य यानि क्रियन्ते तानि साहसानि ।

**सिद्धम्**–सि. ३–४६. पक्वम्, साधितम्, संस्कृतम् ।

**सिद्धसाधिताः**–सू. ११–५०, ५२ श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः । वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः ।

**सिद्धिः**–सू. २५–२२. उत्पत्तिः ।

**सिराः**–सू. ३०–१२ सरणात् सिराः ।

**सिराकर्म**–चि. २६–२०४ सिराव्यधनम् ।

**सिराजालम्**–सू. १७–२१. सिराणां जालकाकारेण ग्रथनम् ।

**सिरानद्धः**–चि, ५–१६९. सिराभिः आसमन्ताद्बद्धः बद्धः ।

**सिराव्यधनम्**–चि. ७–४० सिरावेधः ।

**सीधुः**–चि. ८–१६५ पक्वापक्वेक्षुरसकृतमद्यम् । (वै. श.)

**सीमन्तः**–इ. ८–६. केशविन्यासः ।

**सीवनम्**– चि. २५–५५. विभक्तस्य सूत्रेण सूच्या च सन्धानम् ।

**सुकम्**–सू. २४–७. कन्दादिकृतसन्धानविशेषः । (वै. श.)

**सुखम्**–सू ३०–२३. आरोग्यम् ।

**सुगन्धिः**– सू. २७–१६७. शुभगन्धः ।

**सुप्तसुप्तानि**–चि. १४–१७. अत्यर्थं निश्चेतनानि ।

**सुप्ताङ्गता**–चि. ७–१२. अज्ञानामसंवेदनशीलता ।

**सुप्तिः**–चि. १२–१२. स्पर्शाज्ञानम् ।

**सुभावितम्**–चि. ५.–१५३. द्रवद्रव्येण सुष्ठु आर्द्रीकृतम् ।

**सुमदम्**-चि. २४-७५. सममदम् ।

**सुमुखाः**-चि. २४-८०. प्रियाकाराः ।

**सुमूर्च्छितम्**-चि. २९-७९. साधु मिलितम् ।

**सुरा**-सू. २७-३२३. अनुद्धृतमण्डा ।

**सुरासवः**-सू. २७-१८७. सुराकृत आसवः यत्र सुरयैव तोयकार्यं क्रियते ।

**सुषमा**-इ. ७-८. परमा शोभा ।

**सुसंहतम्**-वि. ८-११६ निबिडसन्धानम् ।

**सूक्ष्मः**-सू १-५९. सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ।

**सूतिकागारम्**-शा. ८-३३. यत्र गर्भिणी प्रसूता, यत्र च तिष्ठति तत् सूतिकागारम्, अरिष्टम् ।

**सूत्रम्**-सू. ३०-३१. आयुर्वेदः । तत्र सूचनात् सूत्रणाच्चार्थसन्ततेः सूत्रम् ।

**सूपः**-सू. १३-२३. मुद्गादि द्विदलदालीनिर्मितं द्रवं भोजनम् ।

**सेचनम्**-चि. २१-१५. सेकः ।

**सेवनी**-चि. ९-४. मेढ्राधोभागे चर्मसन्धिः ।

**सौम्यः**-सू ६-५. सोमगुणप्रधानः ।

**सौवीरम्** चि. २९-६. काञ्जिकभेदः । सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम् । गोधूमैरपि सौवीरमाचार्याः केचिदूचिरे ॥ (व. द.)

**सौवीरम्**-सू. ५-१५. सुवीरानदीभवं सौवीरम् ।

**सौवीरकम्**-सू. २७-१९१. मद्यविशेषः ।

**सौहित्यम्**-सू ५-६. मात्रातिक्रमेण तृप्तिः, तृप्तिमात्रं वा ।

**संकरः**-चि. १७-७१. स्वेदविशेषः ।

**संकल्पः**-चि. २ | ४-४७. योषिदनुरागः ।

**संख्या**-नि. १-१२ | २. सू. २६-३२. गणना, संख्या स्याद् गणितम्, गणितमिह्येकद्वित्र्यादि ।

**सङ्गः**-वि. ४-८. नार्यादिसङ्गः ।

**संग्रहणः**-चि. ८-१२८. संग्राही ।

**सांग्राहिकम्**-सू. २५-४०. आग्नेयगुणभूयिष्ठं तोयांशं परिशोषयेत् । संगृह्णाति मलं तत् स्याद् ग्राही शुण्ठ्यादयो यथा (व. द.)

**संज्ञा**-शा. १-१५४. आलोचनं निर्विकल्पकम् ।

**संज्ञानाशः**-सि. ६-८५. चेतनानाशः ।

**संज्ञास्थापनः**-सू. ४-८. संज्ञां ज्ञानं च स्थापयतीति संज्ञास्थापनः, अष्टचत्वारिंशत्तमो महाकषायः ।

**सन्तर्पणम्**-वि. ८-४८. तृप्तिजनकं धातुवर्धनं च । (व. द.)

**संतापः**-चि. ३-२६. देहेन्द्रियमनसां तापः ।

**संदीपनम्**-चि. ५-१६८. अग्निदीप्तिकरम् ।

**संधारणम्**-वि. ५-१०. वेगनिरोधः ।

**संतानदोषः**-मृतवत्सत्वादिः ।

**संपत्**-शा. २-६. प्रशस्तगुणता ।

**संप्रतिपत्तिः**-वि. ७-८. सम्यक् प्रतिपत्तिः ।

**संप्रसादनाः**-चि. २१-९८. सवर्णकराः सवर्णे साध्ये कर्तव्या इत्यर्थः; किंवा संप्रसादनाः इति रक्तपित्तप्रसादनाः ।

**संप्राप्तिः**-नि. १-६, ११. जातिः जन्म; संप्राप्त्यागतिजातिशब्दैर्योऽर्थोऽभिधीयते स व्याधेः संप्राप्तिरित्यर्थः ।

व्याधिजनकदोषव्यापारविशेषयुक्तं व्याधिजन्मेव संप्राप्तिशब्देन वाच्यम् , अत एव पर्याये "आगतिः" इत्युक्तम् । आगतिर्हि उत्पादककारणस्य व्याधिजननपर्यन्तं गमनम् । इयं च संप्राप्तिर्व्याधिविशेषं बोधयत्येव । यथा ज्वरे "स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यारभ्य 'तदा ज्वरमभिनिर्वर्तयति' इत्यन्तेन या संप्राप्तिरुच्यते, तया ज्वरस्यामाशयदूषकत्वमग्न्युपघातकत्वरसदूषकत्वादयो धर्माः प्रतीयन्ते । न च वाच्यं-दोषाणामयमामाशयदूषकत्वादिर्धर्मः, ततश्च कारणधर्माणां निदानग्रहणेनैव ग्रहणं भवतीति; यतः कारणधर्मोऽप्ययं पृथक् कृत्वोच्यते; यथा — लिङ्गत्वाविशेषेऽपि भाविव्याधिबोधकत्वविशेषात् पूर्वरूपं पृथगुच्यते, अत एव वाग्भटेऽप्येवमेव संप्राप्तिलक्षणमुक्तं-"यथा दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः" (वा. नि. अ. १) इति । (चक्रः)

**संभवः**—सि. १२-४५. संभवो नाम यद्यस्मिन्नुपपद्यते स तस्य संभवः; यथा मुखे पिप्लुव्यङ्गनीलिकादयः संभवन्तीत्यादि । (चक्रः)

**संभारः**—वि. ७-२६. तद्योग्याखिलद्रव्यसमुदायः ।

**संभाषा**—वि. ८-१५. भिषक् भिषजा सह संभाषेत । तद्विद्यसंभाषा हि ज्ञानाभियोगसंहर्षकरी भवति, वैशारद्यमपि चाभिनिर्वर्तयति, वचनशक्तिमपि चाधत्ते, यशश्चाभिदीपयति, पूर्वश्रुते च संदेहवतः पुनः श्रवणाच्छ्रुतसंशयमपकर्षति, श्रुते चासंदेहवतो भूयोऽध्यवसायमभिनिर्वर्तयति, अश्रुतमपि च कंचिदर्थं श्रोत्रविषयमापादयति, यच्चाचार्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातं तत्परस्परेण सह जल्पन् पिण्डेन विजिगीषुराह संहर्षात् , तस्मात्तद्विद्यसंभाषामभिप्रशंसन्ति कुशलाः ।

**संभाषाविधिः**—वि. ८-१५. द्विविधा तु खलु तद्विद्यसंभाषा भवति—सन्धायसंभाषा, विगृह्यसंभाषा च ।

**संमोहः**—सू. १०-२०. मनसो मोहः ।

**संयोगः**—नि. ६-१०. द्वयोर्बहूनां वा द्रव्याणां संहतीभावः ।

**संवत्सरः**—सू. ३०-२५. वत्सरः ।

**संवाहनम्**—सू. ७-२३; वि. २-३/२५. पाणिना पादाङ्घ्रिप्रदेशे सुखमभिहननमुन्मर्दनं च (चक्रः)

**संवृतः**—च. २५-२०. आवृतमुखः ।

**संवृतकोष्ठः**—सि. २-८. वायुनाऽल्पीकृतकोष्ठः, वायुव्याप्तकोष्ठ इत्येके ।

**संवृत्तिम्**—इ. १२-५६. निष्पत्तिम् ।

**संशमनम्**—चि. ३-३१६. न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति च क्रुद्धांस्तत् संशमनमुच्यते ॥ (सु. सू. ३९-७ डल्हणः)

**संशयः**—सि. १२-४३. विशेषाकांक्षाऽनिर्धारितोभयविषयज्ञानम् ; यथा मातरं पितरं चैके मन्यन्ते जन्मकारणम् । स्वभावं परनिर्माणं यदृच्छां चापरे जनाः (सू. अ. ११) ।

**संशोधनम्**—चि. ३-२२७. स्थानाद् बहिर्नयेदूर्ध्वमधो वा मलसञ्चयम् । देहसंशोधनं तत् स्याद् देवदालीफलं यथा ॥ (व. द)

**संसर्गः**—सि. ८-२१. दोषद्वयमेलकः ।

**संसर्गः**—शा.-३-३. मैथुनम् ।

**संसर्जनक्रमः**—सू. १६-२६. पेयादिक्रमः ।

**संसृष्टाः**—चि. ३-१२९. युग्मभूताः

**संस्कारः**—सू. २६-३४; वि. १-२२. संस्कारो हि गुणान्तराधानमुच्यते । ते गुणास्तोयाग्निसंनिकर्षशौचमन्थनदेशकालवासनभावनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते ॥

**संस्कारवाहः** शा. २-१९. संस्कारेण बस्तिवाजीकरणादिना परं यस्य शुक्रमदुष्टद्वारं सत् प्रवर्तते स संस्कारवाहः (चक्रः)

**संस्तम्भः**—सि. ९-४०. स्तब्धता ।

**संस्थानम्**-नि. १-९. संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या (इ. अ. ७)।

**संस्नेहनम्**-चि. १-२९. संसर्जदनुवासनम्।

**संस्पर्शनः**-चि. २-४/४६. संस्पर्शनवान्।

**संस्पर्शासहः**-चि. ७-२४. हस्तादिस्पर्शेन तीव्रवेदनावान्।

**संस्वादविशेषः**-सू. २६-८. रसानामवान्तरभेदः। संस्वादभेदस्तु एकस्यामपि मधुरजाताविक्षुक्षीरगुडादिगतः प्रत्यक्षमेव भेदो दृश्यते, स तु संस्वादभेदः स्वसंवेद्य एव; यदुक्तं-"इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्। भेदस्तथापि नाख्यातुं सरस्वत्याऽपि शक्यते" इति॥ (चक्रः)

**संहननम्**-शा. ८-३२. शरीरम्। (रा. नि.)

**संहर्षः**-वि. ८-१५. स्पर्धा।

**संहर्षणः**-सू. २५-५०. मनःप्रसन्नताजनकः।

**सांख्यः**-शा. ५-१७. संख्या तत्त्वज्ञानं, तया वर्तत इति सांख्यः (चक्रः)

**सांग्राहिकः**-चि. ८-१३० ग्राही।

**स्कन्धः**-वि. ९-३. स्कन्धशब्देनान्तराधिरुच्यते (चक्रः)

**स्कन्धः**-नि. १-२१. बाहुग्रीवासन्धिः।

**स्कन्धः**-सू. २५-२८. समूहः।

**स्कन्नम्**-इ. ३-५. च्युतम्।

**स्तन्यजननः**-सू. ४-८. सप्तदशो महाकषायः।

**स्तन्यम्**-चि. ३०-२२९. दुग्धम्।

**स्तन्यशोधनः**-सू. ४-८. अष्टादशो महाकषायः।

**स्तन्याशयः**-चि. ३०-२४३. स्तनः।

**स्तम्भनम्**-सू. २२-१२. स्तम्भनं स्तम्भयति गतिमन्तं चलं ध्रुवम्; रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद् भवेत्। वातकृत् तम्भनं तत्स्याद् यथा वत्सकटुण्टुकौ॥ समीरगुणभूयिष्ठं शीतत्वाद् यत्नमस्वतः। विधाय वृद्धिं स्तम्नाति स्तम्भनं तद् यथा वटः॥ (व. द.)

**स्तैमित्यम्**-सू. २१-४६. अङ्गानामार्द्रपटावगुण्ठितत्वमिव। (वै. श.)

**स्थावरा**-चि २३-६. अचला।

**स्थिरम्**-सू. २२-१४. स्थिरो वातमलस्तम्भी। (व. द.)

**स्थूलम्**-सू. २२-११. स्थूलः स्याद् बन्धकारकः। स्थूलः स्थौल्यकरो देहे स्रोतसामवरोधकृत्। (व. द.)

**स्निग्धम्**-सू. २२-१५. स्नेहमार्दवकृत्स्निग्धो बलवर्णकरस्तथा। स्निग्धं वातहरं श्लेष्मकारि वृष्यं बलावहम्। (व. द.)

**स्नेहनम्**-सू. २२-११. स्नेहनं स्नेहविष्यन्दमार्दवक्लेदकारकम्।

**स्नेहपिचुः** चि. ३०-१०८. भेषजसाधितक्वाथस्नेहाप्लुतं तूलकं वस्त्रखण्डं वा (व. द.)

**स्नेहमात्रा**-सू. १३-२९. स्नेहस्य परिमाणम्।

**स्नेहसाध्यः**-चि. ३-२१७. स्नेहसाध्यः।

**स्नेहविधिः**-चि ६-३७. स्नेहनविधिः।

**स्नेहविमर्दनम्**-सू. ५-८५. स्नेहेन मर्दनम्।

**स्नेहविरेचनम्**-चि. ५-१७२ स्नेहेन विरेचनम्।

**स्नेहाभ्यङ्गः**-सू. ५-८५. स्नेहेन अभ्यङ्गः।

**स्नेहाशयाः**-सू. १३-११. स्नेहस्थानानि।

**स्नेहोपगः**-सू. ४-८. एकविंशो महाकषायः।

**स्नैहिकधूमः** सू. ५-३७. वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः ॥ वर्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत् । (च. सू. ५-२५३)

**स्पन्दनम्**-सू. १८-७ | १ ईषत्कम्पनम् ।

**स्पर्शनम्**-सू. ५-८७. स्पर्शनेन्द्रियम् ।

**स्पर्शविज्ञानम्**-सू. ३०-६ स्पर्शो विज्ञायतेऽनेनेति. स्पर्शं वा विजानातीति स्पर्शविज्ञानम् ।

**स्पर्शाज्ञत्वम्**-चि. ७-११. स्पर्शज्ञानाभाववत्त्वम् ।

**स्पर्शासहः** चि. ५-१३. हस्तादिस्पर्शेन तीव्रवेदनाजनकः ।

**स्मृतिभ्रंशः** शा. १-१०१. तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः । भ्रश्यते स स्मृतिभ्रंशः स्मर्तव्यं हि स्मृतौ स्थितम् ॥

**स्रावः**-सि. ५-७. स्रवः ।

**स्रावणम्**-सू. ५-१५ नेत्रस्रावणम् ।

**स्रावणम्**-चि. २३-४५ रक्तस्रावणम् ।

**स्रावी**-चि. २५-२०. व्रणभेदः ।

**स्राव्यम्**-चि. १५-७५. विरेचनीयम् ।

**स्रोतः**-सू. ३०-१२ वि-५-४. स्रवणात् स्रोतांसि ।

**स्रोतसां प्रवर्तनम्**-सू. १२-८ स्रोतसां प्रवृत्त्युत्पादनम् ।

**स्रोतसां शोधनम्**-सू. २७-१९३. स्रोतसां शुद्धिकारकम् ।

**स्रोतोविशोधनम्**-सू. २७-२२८. स्रोतसां शोधनम्

**स्रंसः**-सू. २०-१२ किञ्चित्स्वस्थानचलनम् ।

**स्रंसः**-इ. ३-४. मनागगमनम् ।

**स्रंसनम्**-चि. २८-२४१. पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम् । नयत्यधः स्रंसनन्तद् यथा स्यात् कृतमालकः ॥ (व. द.)

**स्वनः**-इ. ५२२ शब्दः ।

**स्वप्नः**-वि. ८-८७. निद्रा ।

**स्वप्नदर्शनम्**-इ. १-३. स्वप्नानां दर्शनम् ।

**स्वभावः**-सू. ११-६. स्वकीयो भावः; परिदृश्यमानपृथिव्यादिभावानामेवायं स्वभावो-यत्-संयोगविशेषान्मिलिताः सन्तश्चेतनं पुरुषादिलक्षणं कार्यविशेषमारभन्ते, यथा सुराबीजादीनि प्रत्येकममदकराण्यपि मदकरं मद्यमारभन्ते, नात्र कश्चिदात्मा विद्यते यस्य परलोकः स्यादिति स्वभाववादिनो भावः । (चक्रः)

**स्वरक्षयः** चि. ८-२६ स्वरभेदः ।

**स्वरश्च गन्धश्च**-इ. १-१-३ स्वरादिग्रहणेन च स्वरायभावोऽपि गृह्यते. तेनाङ्गुलिपर्वशब्दाभावगन्धाभावादयोऽपि रिष्टान्यवरुध्यन्ते ।

**स्वरसः** सू. १-७३. सू. ४-७ स्वो रसः स्वरसः प्रोक्तः ।

**स्वर्यम्**-चि. ८-११५ स्वराय हितम् ।

**स्वसंज्ञा**-सि. १२-४४. या तन्त्रकारैर्व्यवहारार्थं संज्ञा क्रियते सा ।

**स्वस्त्ययनम्**-सू. ३०-२१ .स्वस्तिवाचनम् ।

**स्वस्थवृत्तम्**-शा. ६-७. येन विधिना स्वस्थस्तिष्ठति तदाचरणम् । (वै श.)

**स्वस्थवृत्तिः**-सू. १-६७. सुष्ठु अवस्थितो नीरोगत्वेनेति स्वस्थः तस्य वृत्तिः स्वस्थरूपतयाऽनुवर्तनम् ।

**स्वाधारम्**-वि. ८-३. शोभनाभिधेयम् ।

